इति समीरयति स्थिरबालके
कपटवेषमपास्य निजं वपुः ।
सह गणैश्शिवया च समाददे
नयनगोचरताश्च शिशोरगात् ॥ १०१ ॥

शिशुरपूर्वजनोदयदर्शनात
जडिमपात्रमभू[1] दतिविस्मितः
प्रणिपतानि पदानि किमप्यमुं
शिरसि वा निदधानि पदाम्बुजम् ॥ १०२ ॥

[2] मुनिशिशोर्जडिमानमवेक्ष्य तं
हरसमीपगतेन स नन्दिना ।
मुनिसुतेहि न सङ्भ्रममाहथाः
प्रणिपतेश्वरपादसरोरुहम् ॥ ११३ ॥

इति समीरित एव शिशुः क्षणात्
प्रणिपपात तदीयपदाम्बुजम् ।
स्नपयति स्म सुखाक्षिजलैर्वपुः
न च शशाक शिशुः परिभाषितुम् ॥ १०४ ॥

प्रणिपतन्तमुवाच सदाशिवो
मुनिसुतेहि ममाङ्क इहास्स्व भोः ।
परिकृशोऽसि तपःपरि[3] पालनात्
यदभिवाञ्छितमद्य ददामि ते ॥ १०५ ॥

मम वधूर्गिरिजा[4] त्वथ मोदते
सुतधियन्त्वयि[5] कां तमिहेच्छति ।
मम सुतत्रयमद्य पुराजनि
स्फुटममी तनयावधुनैकक: ॥ १०६ ॥

---

[1] क. दिति ।
[2] अ. मुनिसुतैहि न सम्भ्रमाहथा ।
[3] अ. परिशीलनात् ।
[4] अ. त्वयि ।
[5] अ. त्वयि कर्तुमिह ।

इति शिवेन वचस्समुदीरितः
प्रतिजगाद वचः परितोषयन् ।
स्तिमितनेत्रयुगेन [1] शिवं पिबन्
पुलकपुष्पितगात्रलतश्शिशुः ॥ १०७ ॥

सुतहितं वदितुं पितरौ युवां
अधिकृतौ न सुतोऽर्हति भाषितुम् ।
अहमिदन्तु वृणे परमार्थत-
स्तव पदाम्बुजभक्तिमनश्वराम् ॥ १०८ ॥

इति निशम्य वचः परमेश्वरो
मुनिसुतं निजमङ्कमजीगमत् ।
मुनिसुतस्य मुखं परिजिघ्रवान् [2]
[3] भवभयाच्च बहिर्निरगान्मुनिः ॥ १०९ ॥

मुनिपुराचरितन्त्व [4] वदच्छिवः
प्रमुदितोदितदुग्धमहार्णवम् ।
मुनिसुताय युताय [5] विधाय तं
[6] मुनिगदुर्दशतापि तिरोदधे ॥ ११० ॥

गिरिसुतापि [7] निजाङ्कमनीनयत्
मुनिसुतं प्रददौ स्तनजं पयः ।
मम सुतोऽसि निजस्त्वमतः परं
विहर तात यथासुखमूचिषी ॥ १११ ॥

[8] अपि शिशो [9] विदितोऽसि महागमा-
न्मम षडाननपद्मविनिर्गतान् ।
सकलवर्गनिदानविबोधना-[10]
न्गुरुकृपासुलभान् भवदाहिनः ॥ ११२ ॥

---

[1] अ. शिवौ ।
[2] का. जिघ्रिवान् ।
[3] अ. भवभयं निरगाच्च बहिर्मुनेः ।
[4] क. विदञ्छिवः ।
[5] अ. धुताघचयाय ।
[6] का. मुनिवपुर्दधतेव तिरोदधे ।
[7] का. मुपानयत् ।
[8] अ. अयि ।
[9] का. विदिता ।
[10] अ. विबोधकान् ।

उपससार महापयसां निधिः
पशुपतेरनुशासनतश्शिशोः ।
झटिति विस्मयनं जनयन् भुवन्[1]
निबिडशारदचन्द्रिकया समः ॥ ११३ ॥

विविधपुष्पफलास्सुरपादपा-
श्शिशुमुपासितुमागुरनुत्तमाः ।
मृदुगतिश्वयना[2] धुतपल्लवाः
सुखदपाक्षिनिकायनिकूजिताः ॥ ११४ ॥

स्मरति यच्छिशुरस्य पुरः पुरा
पतति तन्मनसोऽपि विकल्पना ।
शिशुरुवाच महागुणसंहति-
[3]मुनिजनैर्विबुधैरपि दुर्लभा ॥ ११५ ॥

इति महागुणसिद्धिमवाप्य [4]स-
च्छिवाशिवानुमतेन गृहं ययौ ।
प्रणिपपात स [5]मातृपदाम्बुज
शिशुमुदीक्ष्य [6]मुमोद जनन्यपि ॥ ११६ ॥

व्यासाचलेन रचिते मधुरेऽनवद्ये
काव्ये ययौ द्रुतविलम्बितवांस्तृतीयः ।
सर्गो निसर्गविमलः परमोपमन्यु-
[7]माहात्म्यभाषणपरः [8]कथया हि मोदी ॥ ११७ ॥

॥ इति श्रीशङ्करविजये व्यासाचलीये
तृतीयस्सर्गः ॥

---

[1] अ. स्फुटम् ।
[2] का. नायुधपल्लवाः ।
[3] अ. गणैः ।
[4] अ. सन् ।
[5] का पदाम्बुजम् ।
[6] अ. तुतोष ।
[7] क. पदः ।
[8] अ. कथयाभिमोदी ।

## अथ चतुर्थस्सर्गः ।

---

एवं फलप्रद[1] मुनीश्वरमीश्वराणा-
मीशं [2] भजाव किमितस्सकलार्थसिद्ध्यै ।
तत्रोपमन्युमहिमा परमं प्रमाणं
नो देवतासु जडिमा जडिमा मनुष्ये ॥ १ ॥

एवं कलत्रवचनं स निशम्य [3]भक्त्या
सम्पूजनाय गिरिशस्य मनो दधार ।
सा तस्य दुश्चरतपश्चरणोद्यतस्य
तत्रानुकूल्यमकरोद्गृहवाटिकायाम् ॥ २ ॥

तस्योपधाम किल सन्निहितापगैका
स्नात्वा सदाशिवमुपास्त जले स तस्याः ।
कन्दाशनः कतिचिदेव दिनानि पूर्वं
पश्चात्तदाऽऽस शिवपादयुगाब्जभृङ्गः ॥ ३ ॥

जायापि तस्य विमला नियमोपतापै-
श्चिक्लेश कायमनिशं शिवमर्चयन्ती ।
क्षेत्रे वृषस्य निवसन्तमलं सुतार्थं
कालोऽत्यगादति[4] तयोस्तपतोरनेकः ॥ ४ ॥

देवः कृपापरवशो द्विजवेषधारी
प्रत्यक्षतश्शिवगुरुं गत आत्तनिद्रम् ।
प्रोवाच भोः किमभिवाञ्छसि किं तपस्ते
पुत्रार्थितेति वचनं स जगाद विप्रः ॥ ५ ॥

---

[1] अ. मपीश्वर ।
[2] क. भजाव कमितः ।; का. भवाय किमतः ।
[3] अ. कर्ता ।; का. भर्ता ।
[4] अ. ° दिति ।

देवोऽप्यपृच्छदथ तं द्विजसिद्ध सत्यं
सर्वज्ञमेकमपि सर्वगुणोपपन्नम् ।
पुत्रं ददान्यथ बहून् विपरीतकांस्ते
भूर्यायुषस्तनु [1]गुणानवदद्द्विजेशः ॥ ६ ॥

पुत्रोऽस्तु मे बहुगुणः प्रथितानुभावः
सर्वज्ञतापदमितीरित आबभाषे ।
दद्यामुदीरितपदं तनयं तपो मा
पूर्णो भविष्यसि गृहं द्विज गच्छ दारैः ॥ ७ ॥

आकर्णयन्निति बुबोध स विप्रवर्य-
स्तच्चाब्रवीन्निजकलत्रमनिन्दितात्मा ।
स्वप्नं शशंस [2]वनितामणिरस्य भार्या
सत्यं भविष्यति तु नौ तनयो महात्मा ॥ ८ ॥

तौ दम्पती शिवपरौ नियतौ स्मरन्तौ
स्वप्नेक्षितं गृहगतौ बहुदक्षिणान्नैः ।
सन्तर्प्य विप्रनिकरं तदुदीरिताभि-
राशीभिरापतुरनल्पमुदं विशुद्धौ ॥ ९ ॥

तस्मिन्दिने शिवगुरोरुपयोक्ष्यमाणे
भक्ते प्रविष्टमभवत्किल शैवतेजः ।
भुक्तान्नविप्रवचनादुपयुज्य [3] शेषं
सोऽभुङ्क्त सापि निजभर्तृपदाब्जभृङ्गी ॥ १० ॥

गर्भं दधार शिवधर्मसौ मृगाक्षी
गर्भोऽप्यवर्धत शनैर्भवच्छरीरम् ।
[4] तेजोविशेषविनिपातितदृष्टिपातं
बिम्बं रवेर्दिवसमध्य इवोग्रतेजः ॥ ११ ॥

---

[1] का. गुणान्वद तद्द्विजेश । [2] का. मुदितास्य ।

[3] अ. उपयुक्तशेषं ।

[4] अ. तेजोऽतिरेकविनिवारित ।; का. तेजोऽतिरेकविनिवर्तित ।

गर्भालसा [1] गतवती गतिमान्द्यमीष-
[2] दापेति नाद्भुतमिदं धरते शिवं या ।
यो विष्टपानि बिभृते हि चतुर्दशापि
यस्यापि मूर्तय इमा वसुधाजलाद्याः ॥ १२ ॥

संव्याप्तवानपि शरीरमशेषमेव
[3] नोपास्थिमाविरसकामकृतात्र [4] काश्चित् ।
यत्पूर्वमेव महसा दुरतिक्रमेण
व्याप्तं शरीरमदसीयममुष्य हेतोः ॥ १३ ॥

रम्याणि गन्धकुसुमान्यपि गर्धमस्यै
नाधातुमैशत [5] भरात् किमु भूषणानि ।
यद्यद्गुरुत्वपदमस्ति पदार्थजातं
[6] तत्तद्धिधारणविधावलपा बभूव ॥ १४ ॥

तां दौहृदं भृशमबाधत [7] दुश्शरारिः
[8] प्रेतः परः किल न मुञ्चति [9] मुञ्चतेऽपि [?] ।
[10] आनीय दुर्लभमपोह्यति याचतेऽन्यत्
[11] तद्वाप्यपोह्य पुनरर्दति सान्यवस्तु ॥ १५ ॥

तां बन्धुतागमदुपाश्रितदोहदार्ति-
मादाय दुर्लभमनर्घ्यम [12] पूर्ववस्तु ।
आस्वाद्य बन्धुजनदत्तमसौ जहर्ष
हा हन्त गर्भधरणं खलु दुःखहेतुः ॥ १६ ॥

---

[1] अ. भगवती ।
[2] का. दाप्नोति ।
[3] अ. वा ।; क. स्थिताविरस ।; का पास्थिमासुरधिकात्र ।
[4] अ. काञ्चित् ।
[5] का. पुनः ।
[6] क. कतत्तद्धि धारण ।
[7] अ. दुःशठारिः ।
[8] अ प्रातः ।; का. पूतः ।
[9] का. ऽस्ति ।
[10] अ. आनीत ।
[11] का तच्चाप्यवाप्य
[12] का. पूपवस्तु ।

उक्ष्णा निसर्गधवलेन महीयसा [1]सा
चात्मानमैक्षत समूढमुपात्तनिद्रा ।
सङ्गीयमानमपि गीतविशारदाद्यै-
र्विद्याधरप्रभृतिभिर्विनयोपयातैः ॥ १७ ॥

[2]आकर्णयन् जय जयेति वरं दधाना
रक्षेतिशब्दमवलोकय माढशेति ।
[3]आकर्ण्य नोत्थितवती पुनरुक्तशब्दं
सा विस्मिता किल शृणोति निरीक्षमाणा ? ॥ १८ ॥

मानुष्यधर्ममनुसृत्य मयैतदुक्तं
काऽपि व्यथा शिवमहाधरणेन वध्वाः ।
सर्वव्यथान्यतिकरं [4]प्रतिकर्तुकामाः
देवं भजन्त इति तत्त्वविदां प्रवादः ॥ १९ ।

लग्ने शुभे शुभयुते सुषुवे कुमारं
श्रीपार्वतीव सुखिनी शुभवीक्षिते च ।
जाया सती शिवगुरोर्निजतुङ्गसंस्थे
सूर्ये कुजे रविसुते च गुरौ च केन्द्रे ॥ २० ॥

दृष्ट्वा सुतं शिवगुरुः शिववारिराशौ
मग्नोऽपि धर्ममनुसृत्य जले न्यमाङ्क्षीत् ।
[5]व्यश्राणयत् बहुधनं वसुधाश्च गाश्च
जन्मोक्तकर्म विदधे द्विजपुङ्गवेभ्यः ॥ २१ ॥

तस्मिन्दिने मृगतरक्षुकरीन्द्रसिह्य-
सर्पाखुमुख्यबहुजन्तुगणा द्विषन्तः ।
वैरं विहाय सह चेरुरतीव हृष्टाः
कण्डूमपाकृषत साधु मिथो निघृष्टाः ॥ २२ ॥

---

[1] अ. असावात्मान । [2] अ. आकर्णयत् ।
[3] अ. आकर्णितोत्थितवती । [4] अ. परिहर्तुं ।
[5] क्ष. विश्राणयन् ।

वृक्षा लताः कुसुमराशिफलान्यमुञ्चन्
नद्यः प्रसन्नसलिला निखिलास्तदैव ।
जाता जहुर्जलधयोऽपि निजं विकारं
भूभृद्गणादपि जलं सहसोत्पपात ॥ २३ ॥

[1] अद्वैतवादिविपरीतमतावलम्बि-
[2] हस्ताग्रवर्तिवरपुस्तकमप्यकस्मात् ।
उच्चैः पपात जहसुः श्रुतिमस्तकानि
श्रीव्यासचित्तकमलं विकचीबभूव ॥ २४ ॥

सत्कारपूर्वमनुयुक्तमुहूर्तवेदि-
विप्राश्शशंसुरभिवीक्ष्य सुतस्य जन्म ।
सर्वज्ञ [3] एष भविता रचयिष्यते च
शास्त्रं स्वतन्त्रमथ [4] वागधिपांश्च जेता ॥ २५ ॥

कीर्तिं स्वकां भुवि विधास्यति यावदेष
किं [5] वोदितेन बहुना शिशुरेष पूर्णः ।
[6] नापृच्छि जीवितमनेन च तैर्न चोक्तं
प्रायो विदन्नपि न वक्ति मनोनिरोधि ॥ २६ ॥

तज्ज्ञातिबन्धुसुहृदिष्टजनाङ्गनास्ता-
स्तं सूतिकागृहनिविष्टमथो निदध्युः ।
सोपायनास्तमभिवीक्ष्य यथा निदाघे
चन्द्रं मुदं ययुरतीव सरोजवक्त्रम् ॥ २७ ॥

[7] तत्सूतिकागृहमवेक्ष्य तनुप्रदीपं
तत्तेजसा यदवभातमभूत् क्षपायाम् ।
आश्चर्यमेतदजनिष्ट समस्तजन्तो-
स्तन्मन्दिरं वितिमिरं यदभूददीपम् ॥ २८ ॥

---

[1] अ. वाद ।
[2] क. पर ।
[3] का. एव ।
[4] का. वागधिपां च ।
[5] अ. चोदितेन ।
[6] का पृष्टं न ।
[7] अ. अवैक्षत न प्रदीपम् ।

यत्पश्यतां शिशुरसौ कुरुते शमग्र्यं
तेनाकृतास्य जनकः किल शङ्कराख्याम् ।
यद्वा चिराय किल शङ्करसम्प्रसादात्
जातस्ततो व्यधित शङ्करनामधेयम् ॥ २९ ॥

सर्वं विदन् सकलशक्तियुतोऽपि बालो
मानुष्य [1]जातिमनुकृत्य चचार तद्वत् ।
बालश्शनैर्हसितुमारभत क्रमेण
[2]सृप्तुं शशाक गमनाय पदाम्बुजाभ्याम् ॥ ३० ॥

भाषामवेत्प्रथमहायन एव बालः
वर्णान्पपाठ किल हायनके द्वितीये ।
ग्रस्ताक्षराण्यपि स वाचयितुं प्रगल्भः
काव्यं पुराणमितिहासकथाः पपाठ ॥ ३१ ॥

कर्माणि तस्य जनकः [3]श्रुतिचोदितानि
कुर्वञ्जरन्नपि तुतोष सुतेन्द्रदृश्वा ।
तं [4]पञ्चमाब्द उपनेतुमनास्स एव
पञ्चत्वमाप दुरतिक्रम [5]एष कालः ॥ ३२ ॥

आलोक्य वल्लभमूर्तिं करुणं सबाला
वृद्धा रुरोद विललाप च भर्तृशोकात् ।
हा हन्त नाथ शिशुमध्वनि [6]मुञ्चमानः
गन्तुं क्व वा समभिवाञ्छसि देहि वाचम् ॥ ३३ ॥

कृच्छ्रेण लब्धशिशुरेष चिरं स जीवेत्
मावाथयान्तमनुयामि भवन्तमद्य ।
बालं विमुच्य जरतीमपि मां प्रियाद्य
यातस्य किं [7]नु सफलं वद देहि दृष्टिम् ॥ ३४ ॥

---

[1] अ. मनुसृत्य ।
[2] का. स्रप्तुं ।
[3] अ. बोधितानि ।
[4] अ. मुपनेतुं ।
[5] का. एव ।
[6] का. मां च मुक्त्वा ।
[7] अ. किं तव फलं ।

तां बन्धुताभ्यधित कालवशं प्रयान्तीं
सन्तोऽपि कालमतिलङ्घयितुं न तेऽपि ।
शक्तास्ततो जरति बालमिमं निसर्गात्
प्राज्ञं प्रपाहि कुरु संस्कृतिमस्य शीघ्रम् ॥ ३५ ॥

कश्चिन्मृतिं व्रजति कश्चन जायतेऽस्मि-
न्संसारमार्ग इति कल्पितकल्पनेयम् ।
तस्मान्न शोच्यमनघ गृहरक्षिका स्या
बालेन साकमधुना त्यज शोकमेनम् ॥ ३६ ॥

एवं स्वबन्धुगदिता[1] स्वयमुत्ससर्ज
संस्कारगात्मकदिनुः श्रुतिदृष्टमार्गात् ।
साचीकरत्सतनया स्वहितैस्सपिण्डैः
[2]श्राद्धादि कर्म च सदीक्षमनुक्रमेण ॥ ३७ ॥

दीक्षां समाप्य विधिवत्किल पञ्चमाब्दे
[3]सौम्ये मुहूर्त उपनीतिमचीकरत्सा ।
बालस्य गृह्यविधिना श्रुतिषु प्रवीणैः
स्वैर्ब्राह्मणानपि ततर्प विचित्रभोज्यैः ॥ ३८ ॥

स ब्रह्मचर्यमनुरुध्य निजं स्ववेद-
मध्यैष्ट वेदमपरं तदनु क्रमेण ।
एवं गुरोः पठितवांश्चतुरोऽपि वेदान्
तन्मूलमस्य कथयन्ति यजुस्समाख्यम् ॥ ३९ ॥

माता क्रमेण जरती व्यटितुं न शक्ता
स्नानादि कर्म न विमुञ्चति सा तथापि ।
ईर्षाद्विदूरगनदीं किल शङ्करोऽसा
वात्मीयमन्दिरसमीपगतां व्यधत्त ॥ ४० ॥

---

[1] अ. कथिता । अ. सम्यङ् ।

अद्यापि केरलजनास्समुदीरयन्ति
स्रोतस्विनीं बहुजवां विधुताघपुञ्जाम् ।
अम्बापगेति [1] यदियं तनयेन मातु-
स्सौख्यार्थमात्मनिलयान्तिकगा [2] व्यधत्त ॥ ४१ ॥

सा शङ्करस्य शरणं स च तज्जनन्या
अन्योन्ययोगाविरहस्त्वनयोरसह्यः ।
नोद्वोढमिच्छति तथाप्यमनुष्यभावा-
न्मेरुं गतः किमभिवाञ्छति दुष्प्रदेशम् ॥ ४२ ॥

प्रातश्च सायमपि मज्जनमत्र बालो
नादेयवारिणि करोति स सर्वकालम् ।
स त्वेकदा जलमगाहत मङ्क्तुकाम-
स्तत्राग्रहीज्जलचरः किल तीक्ष्णदंष्ट्रः ॥ ४३ ॥

भक्तोऽपि मातरि स संन्यसनं [3] चिकीर्षन्
स्रोतस्विनीजलगनक्रगृहीतमाख्यत् ।
आत्मानमक्षततनुं जननीति शोचन्
साप्यागता परवशा स्थितदेहमात्रा ॥ ४४ ॥

साऽब्रूत किं सुत विरोदिषि सोऽभ्यधात्तां
नक्रोऽम्ब मां नयति तीव्रतनुर्बलाढ्यः ।
प्रणान्विधारयितुमुत्सह एव नाद्य
सन्न्यासवेषकरणे मम जीवितं स्यात् ॥ ४५ ॥

सन्यासमेकतनया तनयं कथञ्चि-
न्नो कारयेत [4] जननी तदपीह माता ।
सर्वात्मना नशनतो न्यसनं वरं मे
तस्मिंस्तु लोचनयुगे न हि दर्शनं स्यात् ॥ ४६ ॥

---

[1] अ. यदिमां तनयः स्वमातुः ।
[2] अ. कगां ।
[3] अ. चिकीर्षुः ।
[4] का. जगतीह न कापि माता ।

आलोच्य सा तनयसन्न्यसनाय बुद्धिं
चक्रे ततोऽभ्यधित सन्न्यसनं कुरुष्व ।
सन्न्यस्तमित्यभिदधौ वचनं तदानीं
नद्यास्तटं सुखमवाप स नक्रमुक्तः ॥ ४७ ॥

उक्त्वा मुमूर्छ जननी पतिता क्षितौ सा
तां चाभिषिच्य पयसा समजीवयत्सः ।
प्रोवाच मा जननि शोकवशं गता भू
वक्ष्याम्युपायमनघे तव रक्षणाय ॥ ४८ ॥

मातर्विधेयमनुशाधि यदत्र कार्यं
संन्या[1]सिना तदु करोमि न [2]सन्दिहेऽहम् ।
वस्त्राशने तव यथेष्टममी प्रदद्यु-
र्गृह्णन्ति ये धनमिदं मम पैतृकं यत् ॥ ४९ ॥

देहेऽम्ब रोगवशगे च सनाभयो मे
द्रक्ष्यन्ति शक्तिमनुसृत्य मृतिप्रसङ्गे ।
अर्थग्रहाज्जनभयाच्च यथाविधानं
कुर्युश्च संस्कृतिममी [3]न च भेयमीषत् ॥ ५० ॥

यज्जीवितं जलचरस्य मुखात्तदिष्टं
संन्यास[4]सङ्गरवशान्मम [5]देहपाके ।
संस्कारमेत्य विधिवत्कुरु शङ्कर त्वं
नो चेत्प्रसूय मम किं फलमीरय त्वम् ॥ ५१ ॥

अह्न्यम्ब रात्रिसमये समयान्तरे वा
सश्चिन्तय स्ववशगाऽवशगाऽथवा माम् ।
एष्यामि तत्र समये सकलं विहाय
विश्वासमाप्नुहि मृतावपि संस्करिष्ये ॥ ५२ ॥

---

[1] अ. संन्यासिनां । [2] अ. संशयीऽत्र ।
[3] अ. नविभेयमीषत् । [4] अ. सङ्कर ।
[5] अ. पाते ।

संन्यस्तवान् शिशुरयं विधवामनाथां
क्षिप्त्वेति मां पथि कदापि न चिन्तनीयम् ।
यावन्मया स्थितवता फलमापनीयं
मातस्ततश्शतगुणं फलमापयिष्ये ॥ ९३ ॥

इत्थं स मातरमनुग्रहणेच्छुरुक्त्वा
प्रोचे सनाभिजनमेष विचक्षणाग्र्यः ।
संन्यासकल्पितमना व्रजितास्मि दूरं
तां निक्षिपामि जननीमधुना भवत्सु ॥ ९४ ॥

एवं सनाभिजनमुत्तममुत्तमाग्र्यः
श्रीमातृकार्यमभिभाष्य करद्वयेन ।
संप्रार्थ्य तां स्वजननीं विनयेन तेषु
निक्षिप्तवान् [1] स नयनाम्बु विमुञ्चमानाम् ॥ ९५ ॥

आत्मीयमन्दिरगतां[2] भयदामसौ यत्
चक्रे विदूरगनदीं जननीहिताय ।
तत्तीरसंश्रितयदूद्वहधाम किञ्चित्
सा निम्नगाऽऽरभत ताडयितुं तरङ्गैः ॥ ९६ ॥

वर्षासु वर्षति हरौ जलमेत्य किञ्चि-
दन्तः पुरं भगवतोऽपनुनोद मृत्स्ना ।
आरब्धमूर्तिरनघश्चलितुं क्रमेण
[3]देवो बिभेदिव न मुञ्चति भीर्हि साङ्गम् ॥ ९७ ॥

प्रस्थातुकामम[4]नसं भगवाननङ्ग-
वाचावदत्कथमपि प्रणि[5]पत्य मातुः ।
पादारविन्दयुगलं परिगृह्य चाज्ञां
श्रीशङ्करं जनहितैक[6]रतं स कृष्णः ॥ ९८ ॥

---

[1] अ. नयनजाम्बु । [2] अ. समीपगतां यदासौ
[3] का. देवेऽविभेदिव । [4] अ. अनघं ।
[5] अ प्रतिपत्य । [6] अ रसं ।

आनेष्ट दूरगनदीं कृपया भवान्यां
सा मातिमात्रमनिशं बृहुलोर्मिहस्तैः ।
क्लिश्नाति ताडनपरा वद कोऽभ्युपायो
वस्तुं [1]क्षमो न नितरां द्विजपुत्र यासि ॥ ५९ ॥

आकर्ण्य वाचमिति तामतनुं गुरुर्नः
प्रोद्धृत्य कृष्णमचलं शनकैर्भुजाभ्याम् ।
प्रातिष्ठिपन्निकट एव स यत्र बाधा
नाम्येत्युदीर्य सुखमास्व चिरायुरेधि ॥ ६० ॥

तस्मात्स्वमातुरपि भक्तिवशादनुज्ञा-
मादाय [2]संसृतिमहाब्धिविरक्तिभाक् सः ।
गन्तुं मनो व्यधित संन्यसनाय दूरं
किं नौस्थितः पतितुमिच्छति वारिराशौ ॥ ६१ ॥

[3]प्रायाद्गृहात्स्थिरमना मुदितोऽप्रकम्प्य-
स्तुर्याश्रमे कृतमनाः किल दूरदेशम् ।
गोविन्दनाथमुनिमेत्य महानुभाव
संन्यासगृह्यविधिना विरजन् भवेऽस्मिन् ॥ ६२ ॥

व्यासः पराशरसुतः किल सत्यवत्यां
तस्यात्मजश्शुकमुनिः प्रथितानुभावः ।
तच्छिष्यतामुपगतः किल गौडपादो
गोविन्दनाथमुनिरस्य च शिष्यभूतः ॥ ६३ ॥

शुश्राव तस्य निकटे किल शास्त्रजालं
यश्चाशृणोद्भुजगसद्मगतस्त्वनन्तात् ।
शब्दाम्बुराशिमखिलं समयं विधाय
यश्चाखिलानि भुवनानि बिभर्ति मूर्ध्ना ॥ ६४ ॥

---

[1] क. क्षमे न ।  [2] अ. विरक्तिमान् सः ।
[3] अ. गत्वा ।

श्रीशङ्करोऽष्टमसमश्चतुरोऽपि वेदान्
स द्वादशे सकलशास्त्रकलामवाप ।
संव्याप देशनिचयं निगमप्रसून-
सच्छास्त्रसद्विटपकोऽमितशाकपूर्णः[1] ॥ ३५ ॥

तीर्थानि सेवितुमनास्स [2] ययावुदीचीं
काष्ठां क्षणेन बदरीं [3] मुनिसङ्घजुष्टाम् ।
संप्राप तत्र च दिनानि बहून्यवात्सी-
द्विद्वज्जनैर्बहुविधैरुपसेव्यमानः ॥ ६६ ॥

श्रीशङ्कराचार्यगभस्तिमाली
श्रीव्याससूत्राम्बुजकुड्मलानि ।
वेदान्तकासारसमुद्भवानि
[3] प्राबूबुधद्भ्रमधुव्रतानि ॥ ६७ ॥

श्रीशङ्कराचार्यरवावुदेत्य
प्रकाशमाने कुमतिप्रणीताः ।
[5] व्याख्यान्धकाराः प्रलयं समीयु-
र्दुर्वादिचन्द्राः प्रभया वियुक्ताः ॥ ६८ ॥

श्रीशङ्कराचार्य दिवाकरेण
प्रकाशितास्सूत्रपयोजषण्डाः ।
बभौतरां व्यासमुनिस्तटाको
वेदान्त [5] विद्यो विनिगूढवर्यः ॥ ६९ ।

आत्मीयसूत्रनिकरस्य [6] निबद्धभाष्यं
श्रुत्वा पराशरसुतो मुनिराजगाम ।
दृष्ट्वा मिथो [8] ऽप्यतनुतामुचितां सपर्यां
तं स्माह शङ्करमुनिर्मुदितो यतीन्द्रः ॥ ७० ॥

---

[1] अ. शङ्करद्रुः ।
[2] अ. ययावुदीचीकाष्ठां क्रमेण ।; का. यथाप्रतीचो काष्ठां क्रमेण ।
[3] अ. वृन्द ।
[4] अ. प्राबोधयत् ।
[5] अ. व्याख्याप्रकाराः ।
[6] अ. वेद्यो ।; का. देहोऽपि निगूढचर्यः ।
[7] अ. निबन्ध ।
[8] अ. व्यतनुतां ।

द्वैपायन स्वागतमस्तु तुभ्यं
दृष्ट्वा भवन्तं [1]त्वरितो मयार्थः ।
युक्तं तदेतत्त्वयि सर्वकालं
परोपकारव्रतदीक्षितत्वात् ॥ ७१ ॥

मुनेः पुराणानि दशाष्ट साक्षा-
च्छ्रुत्यर्थगर्भीणि सुदुष्कराणि ।
कृतानि पद्यद्वयमत्र कर्तुं
को नाम [2]शक्तोऽतिसुसङ्गतार्थम् ॥ ७२ ॥

वेदार्णवाः प्रतियुगं विहिताश्चतुर्धा
शाखाप्रभेदनवशादपि तान्विभक्तान् ।
मन्दाः कलौ क्षितिसुता जनितार एते
वेदान् ग्रहीतुमलसा इति चिन्तयित्वा ॥ ७३ ॥

एष्यद्विजानासि भवन्तमर्थं
गतञ्च सर्वं न न वेत्सि यत्तत् ।
नो चेत्कथं भूतभवद्भविष्य
[3]त्काव्याप्रबन्धान् रचयेरजानन् ॥ ७४ ॥

आभासयन्नान्तरमङ्ग बाह्यं
स्थूलञ्च सूक्ष्मं बहिरन्तर [4]स्थम् ।
अपानुदन्नारतशीतरश्मि-
रभूतपूर्वो भगवान्पयोधेः ॥ ७५ ॥

वेदाष्षडङ्गा निखिलञ्च शास्त्रं
महान्महाभारतवारिराशिः ।
त्वत्तः पुराणानि च सम्बभूवु-
स्सर्वं त्वदीयं खलु वाङ्मयाख्यम् ॥ ७६ ॥

---

[1] अ. चरितो मयार्थः । [2] अ. शक्नोति ।
[3] अ. कार्य । [4] अ. अन्धम् ।

आगच्छतामपि यतां महतां न कार्यं
मुक्त्वा ध्रुवं परमनुग्रहणं परेषाम् ।
पृच्छामि कारणमिहागमने तथापि
प्रष्टुं न चोचितमथापि कुतूहलेन ॥ ७७ ॥

अस्ति प्रयोजनमिहाऽऽगमने यतीन्द्र
वक्ष्यामि तच्छृणु मया कृतसूत्रकाणाम् ।
भाष्यं व्यधायि किल भाष्यमपूर्वमेत-
त्तानि प्रियाणि मम सर्वनिबन्धनेभ्यः ॥ ७८ ॥

तद्द्रष्टुकामो वनमागतोऽह-
मित्युक्तवन्तं यतिरब्रवीत्तम् ।
सत्यं महत्सूत्रनिरीक्षणेन
बुद्धिं पुनामीति न बुद्धिमत्वात् ॥ ७९ ॥

भाष्यं तदुक्त्वार्पिपदस्य हस्ते
हस्तद्वयेनादरतो विनीतः ।
आदाय सर्वत्र निरैक्षतासौ
प्रसादगाम्भीर्यगुणाभिरामम् ॥ ८० ॥

सूत्रानुकारि मृदुवाक्यनिवेदितार्थं
स्वीयैः पदैस्सह निराकृतपूर्वपक्षम्
सिद्धान्तयुक्तिविनिवेशिततत्स्वरूपं
दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥ ८१ ॥

बह्वर्थगर्भाणि लघूनि यानि
निगूढभावानि चमत्कृतानि ।
त्वामेकमीड्यं विरहय्य नास्ति
यस्तानि सम्यग्विवरीतुमीष्टे ॥ ८२ ॥

वर्षाणि षोडश तवायुरिति प्रक्लृप्तं
तावन्ति ते पुनरहं वितराणि जीवम्
अद्वैतदर्शनमिदं कुरु सत्प्र[1] तिष्ठं
लोके विनोदचरणं [2]सहितो विनेयैः ॥ ८३ ॥

निसर्गदुर्ज्ञानतमानि को वा सूत्राण्यलं वेदितुमर्थतस्सन् ।
क्लेशस्तु तावान्विवरीतुरेषां यावान्प्रणेतुर्विदुषो वदन्ति ॥ ८४ ॥

इतीरयन्तं प्रतिवाचमूचे स शङ्करः पावितसर्वलोकः ।
त्वत्सूत्रसम्बन्धवशान्मदीयभाष्यं प्रचारं भुवि यातु विद्वन्
॥ ८५ ॥

इतीरयित्वा चरणौ ववन्दे यतिर्मुनेस्सर्वविदो महात्मा ।
प्रदाय [3]संभाप्य परं मुनीशो द्वैपायनस्सोऽ[4]न्तरधाद्यतात्मा
॥ ८६ ॥

अथाऽऽगमद्ब्राह्मणसूनुराराद्धीतवेदोऽधर[5]यन् स्वभासा ।
तेजांसि कश्चित्सरसीरुहाक्षो दिदृक्षमाणः किल देशिकेन्द्रम्
॥ ८७ ॥

आगत्य देशिकपदाम्बुज[6]योरपसत्
संसारवारिधिमनुत्तममुत्तितीर्षुः ।
वैराग्यवानकृतदारपरिग्रहश्च
कारुण्यनावमधिरुह्य दृढां दुरापाम् ॥ ८८ ॥

उत्थाप्य तं गुरुरुवाच गुरुर्द्विजानां
कस्त्वं [7]क्व धाम कुत आगत आत्तधैर्यः ।
बालोऽप्यबालधिषणः प्रतिभासि मे त्व
मेकोऽप्यनेक[8]वदनेकशरीरभासा ॥ ८९ ॥

---

[1] अ. सप्रतिष्ठं ।
[2] का. महितो ।
[3] क. संभाव्य वरं ।
[4] अ. सोऽन्तरयान्माहात्मा ।
[5] अ. अन्तरयन् ।
[6] का. जयोः प्रणम्य ।
[7] का. क्व यासि ।
[8] का. इव नैकशरीरभासा ।

पृष्टो बभाण गुरुमुत्तरमुत्तरज्ञो
विप्रो गुरो मम गृहं बुध चोलदेशे ।
यत्राऽऽपगा वहति पुण्यकवेरकन्या
यस्याः पयो हरिपदाम्बुजभक्तिमूलम् ॥ ९० ॥

अटाट्यमानो महतो दिदृक्षुः
क्रमादिमं देशमुपागतोऽस्मि ।
बिभेमि मज्जन् भववारिराशौ
तत्पारगं मां कृपया विधेहि ॥ ९१ ॥

इत्युक्तवन्तं कृपया महात्मा-
प्यदापयत्संन्यसनं यथावत् ।
यं प्राहुरार्यं प्रथमं विनेयं
श्रीदेशिकेन्द्रस्य सनन्दनाख्यम् ॥ ९२ ॥

अत्रान्तरेऽपि जरती जननी तदीया
सस्मार शङ्करपदं निकटस्थमृत्यु- ।
तच्छङ्करो विदितवान् युयुजे विविक्ते
सोऽन्तर्दधे गगनमण्डलमाससाद ॥ ९३ ॥

योगेन गच्छन् स मुहूर्तमात्रा-
दवातरत्केरलभूविशेषे ।
तद्देशबुद्ध्या पुनरीक्षमाणः
स्वका[1]लटिं जन्मभुवं प्रपेदे ॥ ९४ ॥

तत्रातुरां मातरमैक्षतासौ
ननाम तस्याश्चरणौ कृतात्मा ।
सा चैनमुद्वीक्ष्य शरीरतापं
जहौ निदाघार्त इवाम्बुदेन ॥ ९५ ॥

---

[1] अ. स्वां कालटीं ।

उपादिशद्ब्रह्म[1]पदं सनातनं
न यत्र हस्ताङ्घ्रिविभागकल्पना ।
अन्तर्बहिस्संनिहितं यथाम्बरं
निरामयं जन्मजरादिवर्जितम् ॥ ९६ ॥

तत्रोपदिष्टे न विवेद किञ्चि-
न्मातावदच्छङ्कर न [2]क्षमेऽहम् ।
त्वयोदितं वेदितुमन्यदेव
वदेति मात्रा गदिता न्यगादीत् ॥ ९७ ॥

नारायणं शङ्खगदा[3]सिपद्मं
दधानमब्जासनमम्बुजाक्षम् ।
[4]रमाधरं श्लिष्टमदभ्रभूषणं
सनीरनीराम्बुदसंनिकाशम् ॥ ९८ ॥

तं तादृशं निजसुतोदितमम्बुजाक्षं
चित्ते दधार मृतिकाल उपागतेऽपि ।
चित्तेन कञ्जनयनं हृदि भावयन्ती
तत्याज देहमबला किल योगिवत्सा ॥ ९९ ॥

संस्कर्तुकामो जननीं सनाभीन्
जुहाव नायन् किल दुर्विदग्धाः ।
ततो हुताशं प्रतिगेहमार्दत्
तं चापि नास्मै विततार कश्चित् ॥ १०० ॥

स [5]ञ्छिद्य काष्ठानि सुशुष्कवन्ति
गृहोपकण्ठे धृततोयपात्रः ।
स दक्षिणे दोष्णि ममन्थ वह्निं
ददाह तां तेन च संयतात्मा ॥ १०१ ॥

---

[1] अ. परं ।
[2] अ. क्षमाऽहम् ।
[3] अ. अरि ।
[4] अ. धराश्लिष्टमुदग्रं ।
[5] अ. सञ्चित्य ।

न याचिता वह्निमदुर्यदस्मै
शशाप तान् स्वीयजनान् सरोषः ।
अतः परं वेदबहिष्कृतास्ते
द्विजा यतीनां न भवेच्च भिक्षा ॥ १०२ ॥

शप्त्वा द्विजातीन्भगवांस्तिरोऽभूद्विहायसासौ बदरीं जगाम ।
अद्यापि तद्देशभवा न वेदमधीयते नो यतिनां च भिक्षा ॥

श्रीशङ्करोत्पत्तिकथाभ्यधायि
तस्यैव जिष्णोर्विजयोऽपि यत्र ।
सर्गश्चतुर्थोऽगमदत्र काव्ये
व्यासाचलेनारचिते रसार्द्रे ॥ १०३ ॥

इति श्रीशङ्करविजये व्यासाचलीये
चतुर्थस्सर्गः ।

# अथ पञ्चमस्सर्गः

पृथ्वीं पृथ्वीं पर्यटन् भाष्यकारः
स्वेच्छाचारी शिष्यसङ्घैः परीतः ।
भाष्यं भाष्यं सन्दधानः स्वहस्ते
तीर्थं [1]प्रापत्तीर्थिकस्तीर्थमूर्तिः ॥ १ ॥

कलिन्दपुत्र्यास्सजलाभ्रकान्त्याः
क्षीराभया जह्नुतनूजया च ।
यत्राभवत्सङ्गतिरल्पपुण्यै
स्सुदुर्लभा मुक्तिपदं जनानाम् ॥ २ ॥

गङ्गाप्रवाहै [2]रवरुद्धवेगा
कालिन्दकन्या स्तिमितप्रवाहा ।
अपूर्वसख्या गललज्जयेव
यत्राधिकं भाति विचित्रपाथाः ॥ ३ ॥

ब्रह्मादयोऽप्यामिमतमनिपारशक्ता
यत्रायजन्त पुरुषार्थविशेषसिद्धयै ।
अद्यापि यत्र यजनं प्रथितं प्रशस्तं
यस्य प्रयाग इति नाम बभूव लोके ॥ ४ ॥

यत्राप्लुता दिव्यशरीरभाज
आचन्द्रतारं दिवि भोगजातम् ।
संभुञ्जते [3]व्याधिकथानभिज्ञाः
प्राहेममर्थं श्रुतिरेव साक्षात् ॥ ५ ॥

---

[1] का प्राप्तस्तीर्थकः ।
[2] अ उपरुद्धवेगा; का. उपगूढवेगा ।
[3] का. तेऽत्यंादिकथा ।

भवान्तरोपार्जितपुण्यपूरैर्यत्प्राप्य देहं जहतीह देहिनः ।
बुद्ध्यैव ते ब्रह्मपदं लभन्ते प्राहेममर्थं श्रुतिरेव साक्षात्
॥ ६ ॥

कूपे स्नानं माघमासे प्रशस्तं
तस्माच्छस्तं पुष्करिण्यां ततोऽपि ।
कुल्यास्नानं निम्नगायां ततः स्यात्
यत्र स्नानान्नाधिकं किञ्चिदस्ति ॥ ७ ॥

यत्र मज्जति महामना गले
वालुकाभिरभिपूर्य [1]पटं य. ।
सङ्कलय्य समुपैति तमर्थं
यं न्यधाद्धृदि पुरार्थितमर्थम् ॥ ८ ॥

सस्नौ प्रयागे सह शिष्यसङ्घै-
स्स्वयं कृतार्थो जनसङ्ग्रहार्थी ।
अस्मारि मातापि च या पुपोष
[2]दयारसा दुःखमसोढ भूरि ॥ ९ ॥

ततस्तुषाग्नौ शयितं महान्तं
स भट्टपादं [3]समलोचताग्रे ।
शिष्यैः परीतं ज्वलदग्निकल्पं
जुगोप यो वेदपथं जितारिः ॥ १० ॥

अदृष्टपूर्वं श्रुतपूर्ववृत्तं दृष्ट्वातिमोदं स जगाम भट्टः ।
अचीकरच्छिष्यगणैस्सपर्यामुपाददे तामपि देशिकेन्द्रः
॥ ११ ॥

---

[1] अ. घटं ।    [2] अ. दधार या ।
[3] का. समलोकत ।

उपात्तभिक्षः परितुष्टचित्तः प्रदर्शयामास स भाष्यमस्मै ।
सर्वो निबन्धो ह्यमलोऽपि लोके शिष्टेक्षितस्सञ्चरणं प्रयाति
॥ १२ ॥

दृष्ट्वा भाष्यं हृष्टचेताः कुमारः [1]प्रोचे वाचं शङ्करं देशिकेन्द्रम् ।
लोके ह्यन्यो मत्सर[2]ग्रासशाली सर्वज्ञौ तौ नाल्पभावस्य पात्रम् ॥ १३ ॥

अष्टौ सहस्राणि बिभान्ति [3]विद्वन्
सद्वार्तिकानां प्रथमेऽत्र भाष्ये
अहं यदि स्यामगृहीतदीक्षो
ध्रुवं विधास्ये सुनिबन्धमस्य ॥ १४ ॥

भवादृशां दर्शनमेव लोके
विशेषतोऽस्मिन्समये दुरापम् ।
पुरार्जितैः पुण्यचयैः कथञ्चित्
त्वमद्य मे दृष्टिपथं [4]गतोऽसि ॥ १५ ॥

असारसंसारपयोधिमध्ये
[5]निमज्जतां सद्भिरुदारवृत्तैः ।
भवादृशैस्सङ्गतिरेव साध्या
नान्यस्तदुत्तारविधावुपायः ॥ १६ ॥

चिरं दिदृक्षे भगवन्तमीड्यं
त्वमेव दैवेन समागतोऽभूः ।
न ह्यत्र संसारपथे नराणां
स्वेच्छाविधेयोऽभिमतेन योगः ॥ १७ ॥

युनक्ति कालः क्वचिदिष्टवस्तुना
क्वचित्त्वनिष्टेन च नीचवस्तुना ।

---

[1] का. प्रोवाचैवं ।
[2] अ. ग्राम ।
[3] अ. यद्वत् ।
[4] अ. गतोऽभूः ।
[5] अ. निमज्जता ।

तथैव संयोज्य वियोजयत्यसौ
सुखासुखं कालकृते [1]ह्युपैत्यसौ ॥ १८ ॥

कुतो निबन्धो निरणायि पन्था
न्यरासि नैयायिकयुक्तिजालम् ।
तथान्वबभूवं विषयार्थजातं
न कालमेनं परिहर्तुमीशे ॥ १९ ॥

निरास्थमीशं श्रुतिलोकसिद्धं
श्रुतेरस्वतो मात्वमुदाहरिष्यन ।
न निह्नुवे येन विना प्रपञ्चः
सौख्याय कल्पेत न जातु विद्वन् ॥ २० ॥

तथागताक्रान्तमभूदशेषं
स वैदिकोऽध्वा विरलीबभूव ।
परीक्ष्य तेषां विजयाय मार्गं
प्रावर्तिषि त्रातुमानाः पुराणम् ॥ २१ ॥

सशिष्यसङ्घाः प्रविशन्ति राज्ञां
गेहं तदादानीं स्ववशे विधातुम् ।
जैना मदीया जनमस्मदीं
तदाद्रियध्वं न तु वेदमार्गम् ॥ २२ ॥

वेदोऽप्रमाणं बहुमानबाधात्
परस्परव्याहतवाचकत्वात्
एवं वदन्तो विचरन्ति लोके
न [2]काचिदेषां प्रतिपत्तिरासीत् ॥ २३ ॥

अवेदिषं वेदविघातदक्षा
तन्नाशकं जेतुमबुध्यमानः ।
तदीयसिद्धान्तरहस्यमर्थं
निषेध्यबोधाद्धि निषेधबोध ॥ २४ ॥

---

[1] का॰ प्रवेद्भ्यतः ।
[2] क. कश्चिदेषां प्रतिपक्ष आसीत् ।

यदा तदीयं शरणं प्रपन्न-
स्सिद्धान्तमश्रौषमनुद्धतात्मा ।
अदूदुषद्वैदिकमेव मार्गं
तथागतो जातु कुशाग्रबुद्धिः ॥ २५ ॥

तदापतन्मे सहसास्र[1] बिन्दु-
स्तत्त्वाविदुः पार्श्वनिवासिनोऽन्ये ।
तदा प्रभृत्येव विवेश शङ्का
मय्याप्तभावं परिहृत्य तेषाम् ॥ २६ ॥

[2]विपक्षचोदी बलवान् द्विजातिः
प्रत्यादिशेद्दर्शनमस्मस्मदीयम् ।
उच्चाटनीयः कथमप्युपा[3]या-
न्नैतादृशः स्थापयितुं हि योग्यः ॥ २७ ॥

संमन्त्र्य चेत्थं कृतनिश्चयास्ते
[4]वाचावरा हिंसनवादशीलाः ।
व्यपातयन्नुच्चतरात्प्रमत्तं
मामग्रसौधाद्विनिपातभीरुम् ॥ २८ ॥

पतन्पतन् [5]सौधतलादरूरुवं
यदि प्रमाणं श्रुतयो भवन्ति
जीवेयमस्मिन्पतितस्समस्थले
मज्जीवनेन [6]श्रुतिमानतागतिः ॥ २९ ॥

यदीति सन्देहपदप्रयोगात्
व्याजेन शास्त्रश्रवणाच्च हेतोः ।
ममोच्चदेशात्पततो व्यनाङ्क्षीत्
[7]तदैव चक्षुर्विधिकल्पना सा ॥ ३० ॥

---

[1] अ. श्रु ।
[2] अ. पाटी का पाती ।
[3] क. उपायैः ।
[4] अ. परा ।
[5] क. तलान्यरूरुवम् ।
[6] अ. मानिता; क. श्रुतिमानसा ।
[7] अ. तदैक का यदेक ।

एकाक्षरस्यापि गुरुः प्रदाता
शास्त्रोपदेष्टा किमु भाषणीयम् ।
अहञ्च सर्वज्ञगुरोरधीत्य
प्रत्यादिशं [1]स्तञ्च गिरं महागः ॥ ३१ ॥

तस्मादहं तत्परिहारहेतो-
श्शाये मुमूर्षुस्तुषवह्निमूले ।
यदीह किञ्चित्समयं व्यतीत्य
त्वमागमिष्यो न भवामि भिक्षो ॥ ३२ ॥

प्रायश्चित्तं जानता पण्डितेन
प्रायश्चित्तं दोषजातस्य कार्यम् ।
नो चेद्दोषो यान्तमेवानुगच्छेत्
बाधेतैनं [2]सर्वथा सर्वचित्तम ॥ ३३ ॥

भगवन्प्रवदाम्युपायमेकं
भवतो भाष्यनिबन्धने स्फुटम् ।
मगधेषु वसन् ममास्ति शिष्य-
स्स तु तस्मै प्रभवत्यसंशयम् ॥ ३४ ॥

[3]सदा वदन्योगपदञ्च सांप्रतं
स विश्वरूपः प्रथितो महीतले ।
महागृही वैदिककर्मतत्परः
प्रवृत्तिशास्त्रे निरतस्स कर्मठः ॥ ३५ ॥

निवृत्तिशास्त्रे न कृतादरः स्वयं
केनाप्युपायेन वशं स नीयताम् ।
वशं गते तत्र भवेन्मनोरथ-
स्तदन्तिकं गच्छतु मा चिरं भवान् ॥ ३६ ॥

---

[1] क. प्रत्यादिशं तेन गुरुर्महागः । [2] अ. सर्वदा ।
[3] अ. गदावदादोगदपञ्च । (?); का. गदावतायगप चदो ।

एतावदुक्त्वा विरराम शङ्करं
स भट्टनामा मरणाय दीक्षितः ।
तत्पार्श्ववर्ती विदितार्थसङ्ग्रह-
स्स मण्डनाख्योऽभिजगाम शङ्करम् ॥ ३७ ॥

निवसति स तु नित्यं यस्य वाणीसरोजे
निपतति कविभृङ्गो यत्र संमाननार्थी ।
परिसरति दिशो यद्वादिवर्गः प्रभग्नो
विहरति परिपुष्टो बन्धुवर्गश्च येन ॥ ३८ ॥

गुरुर्गरीयानपि वित्तहीनो
विद्यासु वृद्धोऽपि गुरुप्रदीपः ।
अयं [1]कुरूपी गुरुनित्यवासी
गुरुं विपत्तावपि नो जहाति ॥ ३९ ॥

[2]गमित एष जनोऽद्य महात्मनो
भगवतस्तव पादसरोरुहम् ।
कुरु दृशं कृपयेति समीपगः
[3]श्रुतवचास्सहसा स ददौ करम् ॥ ४० ॥

[4]त्रिमुनिवारमसावपिबज्जलं
रवमयं मुनिवक्त्रबिलोद्भवम् ।
इति मया पुर एव श्रुतोऽप्ययं
नयनगोचरतामधुना गतः ॥ ४१ ॥

इति वचस्सुधयाप्यभिषिक्तवान्
मुनिवरो गृहमेधिशिरोमणिम् ।
[5]विदितवेद्यमनुद्रुतभाषिणं
मुनिर्जनराभिवन्द्यपदाम्बुजः ॥ ४२ ॥

---

[1] अ. गुरुश्रीः ; का. गुरुप्रीः । [2] अ. नमित ।
[3] क. सहसास्य । [4] क. त्रिमुनिसारमसावपि तज्जलं ।
[5] अ. वितत ।

अथ गिरं गृहिराज उपाददे
मम जनिस्सफला भवदीक्षणात् ।
न खलु लोचनमाश्रयते फलं
[1]घटपटादिभिरीक्षणमात्रतः ॥ ४३ ॥

भवादृशैस्सङ्गतिरेव नो गति-
र्गृहे स्थितानां सुतदारपोषिणाम् ।
[2]क्रमेण मोक्तुं भवदीयसेवना-
मतो गृहीत्वार्हसि मामितोऽटितुम् ॥ ४४ ॥

एवं वादिनि मण्डने मृदुमनाः प्रोचे दयालिङ्गितः
श्रुत्याचोदितकर्म एव तनुयास्तेनान्तरं शुद्ध्यति ।
शुद्धेऽन्तःकरणे परिस्फुरति तत् सौख्यात्मकं ब्रह्म ते
शुद्धे दर्पणमण्डले मुखमिव स्वात्मप्रभं सर्वगम् ॥ ४५ ॥

त्यक्त्वा मण्डन भेदगोचरधियं मिथ्याभिमानात्मिका-
मद्वैते भव निष्ठितो मम वचस्ते रोचते यद्यदः
तीर्त्वा संसृतिवारिधिं परपदे ज्ञानप्लवारोहणात्
पारे स्थास्यसि निर्वृतस्सुखमये संसार[3]वार्तोज्झिते ॥ ४६ ॥

एवमेनमनुनीय सत्पदै-
र्ब्रह्मवादनपरैर्गुरुवर्यः ।
मण्डनं निजपदे स्थिरभक्तिं
संविधाय गमनाय मनोऽधात् ॥ ४७ ॥

यत्राद्या महिमा प्रयागविषयो भट्टेडिताचार्ययो-
स्संवादोऽप्यघनोदनो निजगदे व्यावर्णितं सौगतम् ।
शास्त्रस्य श्रवणं विजेतुमपि तान् व्यासाद्रिसंप्रोदिते
श्रीमच्छङ्करदेशिकेन्द्रविजये सर्गोऽगमत्पञ्चमः ॥ ४८ ॥

इति श्रीशङ्करविजये व्यासाचलीये
पञ्चमस्सर्गः ॥

---

[1] का. निरीक्षण । [2] अ. क्षमे न । [3] का. वार्ता ।

## ॥ अथ षष्ठस्सर्गः ॥

अथ प्रतस्थे भगवान्प्रयागात्
दिदृक्षमाणो गृहिविश्वरूपम् ।
विहायसा योगबलेन गच्छन्
अवातरत्तस्य गृहाङ्कणान्तः ॥ १ ॥

स विश्वरूपः कृतवह्निकार्यः
प्रतीक्षमाणोऽतिथिमातिथेयः ।
उदैक्षतैनं स्वशरीरभाभिः
प्रकाशयन्तं विदिशो दिशश्च ॥ २ ॥

स भिक्षवेऽदृष्टचराय तस्मै
सङ्कल्प्य भिक्षां पदयोरमुष्य ।
चिक्षेप पुष्पं चरणावनेजत्[1]
तत्पाथसात्मानमसिञ्चताद्धा ॥ ३ ॥

प्रक्षालिताङ्घ्रिः प्रविवेश काश्चित
व्यतीत्य [2]कक्ष्या गृहमध्यभूमिम् ।
दीपप्रभानिस्सरदन्धकार-
मध्यास्त पीठं परमं मुनीन्द्रः ॥ ४ ॥

आयन्मार्गे देशिकेन्द्रो जनानां
दृष्टेर्मार्गं नाप पापापनोदी ।
ईक्षाञ्चक्रे मन्दिरान्तः प्रविष्ट-
स्तेनैतस्मिन्विस्मयोऽभूत्स तेषाम् ॥ ५ ॥

---

[1] क. अनेजेत् ।   [2] अ. कक्षा ।

रौप्यं पात्रं दीप्यमानं तदग्रे
न्यस्या[1]ज्यादेः पात्रजातं पृथक् च ।
शुभ्रैर्वस्त्रैरूर्ध्वदेशं[2] वितेने
शङ्कावर्जं भिक्षितुं जोषमन्तः ॥ ६ ॥

आनर्च पुष्पाक्षतधूपदीपैः
[3]परं गृहेशो यतिवर्यमेनम् ।
आतिष्ठतां पार्श्वगतौ वटू द्वौ
सचामरौ वीजनकर्म चक्रतुः ॥ ७ ॥

यथोचितं पात्रनिकायमध्ये
तदीयभार्या सुकुमारहस्ता ।
अन्नं घृतं पक्वविशेषजातं
तथोपदंशान् गुडवैकृतानि ॥ ८ ॥

भक्तानि चिक्षेप [4]वराभिधान
[5]यस्यां बभूवोभयभारतीति ।
[6]पुरा किलाध्यैषत धातुरन्तिके
सर्वज्ञकल्पा मुनयो निजं निजम् ॥ ९ ॥

वेदं तदा दुर्वसनोऽतिकोपनो
वेदानधीयन् क्वचिदस्खलत्स्वरे ।
तदा जहासेन्दुमुखी सरस्वती
यदङ्क्रमणोद्भवशब्दसन्ततिः ॥ १० ॥

---

[1] का. स्याज्योदः । [2] अ. देशे । का. देशान् ।
[3] अ. भक्त्या गृहीशो । [4] अ. पराभिधानं ।
[5] अ. यस्या ।
[6] इतः पूर्वमयं श्लोकार्धः अ. पुस्तकेऽधिको दृश्यते यथा—"सरस्वती सा खलु वस्तुवृत्त्या लोकोऽपि तां वक्ति सरस्वतीति" ॥ इति ।

चुकोप तस्यै दहनानुकारिणा
निरीक्षताक्ष्णा मुनिरुग्रशासनः ।
शशाप तां दुर्विनयेऽवनीतले
जायस्व मर्त्येत्यविभक्तसरस्वती ॥ ११ ॥

प्रसादयामास निसर्गकोपनं
तत्पादमूले पतिता विषादिनी ।
दृष्ट्वा विषण्णा मुनयस्सरस्वतीं
प्रसादयाश्चक्रुरिमं तमादरात् ॥ १२ ॥

कृतापराधां भगवन् क्षमस्व तां
पितेव पुत्रं विहितागसं मुने ।
प्रसादितोऽभूदथ संप्रपन्नो
वाण्या मुनीन्द्रैरपि शापमोक्षम् ॥ १३ ॥

ददौ यदा मानुषशङ्करस्य
सन्दर्शनं स्याद्भवितास्यमर्त्या ।
सा शोणतीरेऽजनि विप्रकन्या
सर्वार्थवित्सर्वगुणोपपन्ना ॥ १४ ॥

यस्या बभूवुस्सहजाश्च विद्या
शिरोगतं के परिहर्तुमीशाः ।
सर्वाणि शास्त्राणि षडङ्गवेदान्
काव्यादिकान्वेत्ति परञ्च सर्वम् ॥ १५ ॥

तन्नास्ति नो वेत्ति यदत्र बाला
तस्मादभूच्चित्रपदं जनानाम् ।
सा विश्वरूपं गुणिनं गुणज्ञा
मनोभिरामं द्विजपुङ्गवेभ्यः ॥ १६ ॥

शुश्राव ताश्चापि स विश्वरूपो
जातं तयोर्दर्शनलालसं मनः ।
अन्योन्यसंदर्शनलालसौ तौ
चिन्ताप्रकर्षादधिगम्य निद्राम् ॥ १६ ॥

अवाप्य सन्दर्शनभाषणानि
पुनः प्रबुद्धौ विरहाग्नितप्तौ ।
दिदृक्षमाणावपि नेक्षमाणा-
वन्योन्यवार्ताहतमानसौ तौ ॥ १८ ॥

यथोचिताहारविहारहीनौ
तनोरतनुत्वं स्मरणादुपेताम्[1] ।
दृष्ट्वा तदीयौ पितरौ कदाचि-
दपृच्छतां तौ परिकार्शितङ्गौ ॥ १९ ॥

वपुःकृशं ते मनसोऽप्यगर्वो
न व्याधिपीक्षे न च हेतुमन्यम् ।
इष्टस्य हानेरनभीष्टयोगा
द्भवन्ति दुःखानि शरीरभाजाम् ॥ २० ॥

वीक्षे न तौ द्वावपि [2]वीक्षमणो
विना निदानं न हि कार्यजन्म ।
न तेऽत्यगादुद्वहनस्य कालः
परावमनो न च निःस्वता वा ॥ २१ ॥

कुटुम्बभारो मयि दुस्सहोऽयं
कुमारवृत्तेस्तव कात्र पीडा ।
न मूढभावः परितापहेतुः
पराजितिर्वा तव तन्निदानम् ॥ २२ ॥

---

[1] अ. पेतौ ।   [2] अ. वीक्ष्यमाणौ ।

विद्वत्सु विद्वत्तरताग्रपाठात्
सुदुर्जयोऽर्थादपि तर्कविद्भिः ।
आजन्मना विहितकर्मनिषेवणं ते
स्वप्नेऽपि नास्ति विहितेतरकर्मसेवा ? ॥ २३ ॥

तस्मान्न भयमपि नारकयातनाभ्यः
किन्ते मुखं प्रतिदिनं गतशोभमास्ते ।
निर्बन्धतो [1] बहुदिनं प्रतिपाद्यमानौ
वाक्यं त्रपाभरयुताविदमूचतुः स्म ॥ २४ ॥

निर्बन्धतस्तव वदामि मनोगतं मे
वाच्यन्न वाच्यमिति यद्वितनोति लज्जाम् ।
शोणाख्यपुंनदतटीवसतेर्द्विजस्य
कन्या श्रुतिं गतवती द्विजपुङ्गवेभ्यः ॥ २५ ॥

सर्वज्ञतापदमनुत्तमरूपवेषा
तामुद्विवक्षति मनो भगवन्मदीयम् ।
पुत्रेण सन् सविनयं गदितोऽन्वशाद्द्वौ
विप्रौ वधूवरणकर्मणि सम्प्रवीणौ ॥ २६ ॥

तावापतुर्द्विजगृहं द्विजसन्दिदृक्षू
देशानतीत्य बहुलान्निजकार्यसिद्ध्यै ।
भूभृन्निकेतनगत श्रुतविश्वशास्त्रः
श्रीविश्वरूप इति यः प्रथितः पृथिव्याम् ॥ २७ ॥

तत्पादपद्मरजसे स्पृहयामि नित्यं
साहाय्यमत्र यदि तात भवान्विदध्यात् ।
[2] पुत्र्या वच. पिबति कर्णपुटेन ताते
श्रीविश्वरूपगुरुणा गुरुणा द्विजानाम् ॥ २८ ॥

---

[1] का. बहुतिथ ।    [2] अ.पुत्री ।

आजग्मतुस्सुवसनौ विशदाङ्गयष्टी
संप्रेषितौ सुतवरोद्वहनक्रियायै ।
[1] तावर्चिचद्द्विजवरो विहितोपचारै-
रायानकारणमथो शनकैः पृच्छत् ॥ २९ ॥

श्रीविश्वरूपगुरुवाक्यत आगतौ स्व
इत्यूचतुर्वरणकर्मणि कन्यकायाः ।
संप्रेषितौ श्रुतवयःकुलधर्मवृत्तै-
स्साधारणीं श्रुतवता स्वसुतस्य तेन ॥ ३० ॥

याचावहे तव सुतां द्विज तस्य हेतो
रन्योन्यसङ्घटनमेतु मणिद्वयं तत् ।
मह्यं तदुक्तमभिरोचत एव विप्रौ
[2] दृष्टा वधूर्मम पुनः करवाणि नित्यम् ॥ ३१ ॥

कन्याप्रदानमिदमादधते[3] वधूषु
नो चेदमर्त्यसनसक्तिषु पीडयेयुः ।
भार्यामपृच्छदथ किं [4] करवाव भद्रे
विप्रौ वरीतुमनसौ द्विजराजगेहात् ॥ ३२ ॥

एतां सुतां सुतनया तव सा च कन्या
ब्रूहि त्वमेकमनुमाय पुनर्न वाच्यम् ।
दूरे स्थितिः श्रुतवयःकुलवृत्तजातं
न ज्ञायते दयित किं प्रवदामि तुभ्यम् ॥ ३३ ॥

[5] वृत्तान्विताय कुलवृत्तिसमन्विताय
देया सुतेति विदितं श्रुतिलोकयोश्च ।
नैवं नियन्तुमनघे तव शक्यमेत-
त्तां रुक्मिणीं [6] यदुवराय कुशस्थलीशः ॥ ३४ ॥

---

[1] अ. तावागतौ द्विजवरौ विहितोपचारौ । [2] का. पृष्टा ।
[3] अ. आयतते । [4] का. करवाणि ।
[5] अ. विद्यान्विताय । [6] क. यदुकुलाय ।

प्रादात्स भीष्मकसुतः खलु कुण्डिनेश-
स्तीर्थोपदेशमटतेऽन्वपरीक्षिताय ।
किं केन सङ्कृतमिदं सति मा विचारी-
र्यो वैदिकीं सरणिमग्रहतां प्रयत्नात् ॥ ३५ ॥

प्रातिष्ठिपत्सुगतदुर्जयनिर्जयेन
शिष्यं यमेनमशिषत्स च भट्टपादः ।
किं वर्ण्यते सुदति यो भविता वरो [1]नो
विद्याधनं द्विजवरस्य न बाह्यवित्तम् ॥ ३६ ॥

याऽन्वेति सन्ततमनन्तदिगन्तभाजो
यां [2]राजचोरवनिता न च हर्तुमीशाः ।
संक्षीयते न तु सदा प्रतिपादने या
वध्वार्जनावनपरिव्ययगानि तानि ॥ ३७ ॥

वित्तानि चित्तमनिशं परिखेदयन्ति
चोरान्नृपात्स्वजनतश्च भयं धनानाम् ।
शर्मेति जातु न गुणः खलु बालिशस्य
केचिद्धनं निदधते भुवि नोपभोगम् ॥ ३८ ॥

कुर्वन्ति लोभवशगा न विदन्ति केचि-
दन्येन गोपितमुतान्यजना हरन्ति ।
तच्चेन्नदीपरिसरे जलमेव हर्तृ
सर्वात्मना दुहितरो न गृहे विधेयाः ॥ ३९ ॥

ताश्चेत्पुरा परिणयाद्रज उद्गतं स्वं
पश्येयुरात्मपितरौ बत पातयन्ति ।
दुःखेषु [3]घोरनिरयेष्विति धर्मशास्त्रं
मा भूदयं मम सुताकलहः कुमारीम् ॥ ४० ॥

---

[1] अ. नौ । [2] अ. गणिका ।
[3] अ. घोरनरकेष्विति ।

पृच्छाव सा वदति यं भविता वरोऽस्या
एवं विधाय समयं पितरौ कुमार्याः ।
अभ्याशमीयतुरितो गदितेष्टकार्यौ
श्रीविश्वरूपगुरुणा प्रहितौ द्विजौ द्वौ ॥ ४१ ॥

कन्यार्थिनौ सुतनु किं करवाव वाक्यात्
तस्याः प्रमोदनिचयो न ममौ शरीरे ।
रोमाञ्चपूरमिषतो बहिरुज्जगाम
तेनैव सा प्रतिवचः प्रददौ पितृभ्याम् ॥ ४२ ॥

तेनैव तावपि तयोर्युगलाय सत्य-
मादाय विप्रमपरं पितृगेहतोऽस्याः ।
तौ जग्मतुर्द्विजवरौ स्वनिकेतनाय
. . . . . . . . . . . ॥ ४३ ॥

अस्माच्चतुर्दशदिने भविता दशम्यां
[1] जामित्रतादिगुणपूगयुतो मुहूर्तः ।
एवं विलिख्य गणितादिषु कौशलस्य
विख्यापनाय दिशति स्म सरस्वती सा ॥ ४४

तौ हृष्टपुष्टमनसौ विहितेष्टकार्यौ
श्रीविश्वरूपगुरुमुत्तममैक्षिषाताम् ।
सिद्धं समीहितमिति [2] प्रथितानुभावौ
दृष्ट्वैव तन्मुखमसावथ निश्चिकाय ॥ ४५ ॥

अन्यः स्वहस्तगतपत्रमथार्पिपत्तत्
दृष्ट्वा जहास सुखवारिनिधौ ममज्ज ।
विप्रान् यथोचितमपूपुजदागतांस्तान्
रत्नांशुकादिभिरयं बहुवित्तलभ्यैः ॥ ४६ ॥

---

[1] क. शामित्र ।   [2] अ. भावो ।

पित्रानुशिष्टवसुधासुरसंहितेन
विज्ञापितस्सुखमवाप स विश्वरूपः ।
कार्याण्यवीवददथाऽऽत्मजनान् समेतान्
बन्धुप्रियः परिणयोचितसाधनाय ॥ ४७ ॥

मौहूर्तिका बहव एत्य मुहूर्तजातं
[1] संप्रार्थिता द्विजवरैर्बहुविद्भिरिष्टैः ।
माङ्गल्यवस्तुसहितोऽखिलभूषणाढ्य-
स्संप्रापदक्षततनुः पृथुशोणतीरम् ॥ ४८ ॥

शोणस्य तीरमुपयात[2]मुपाशृणोत्स
जामातरं बहुविदं किल विष्णुमित्रः ।
प्रत्युज्जगाम मुमुदे प्रियदर्शनेन
प्रावीविशद्गृहममुं बहुवाद्यघोषैः ॥ ४९ ॥

दत्वासनं मृदुवचस्समुदीर्य तस्मै
पाद्यं ददौ स मधुपर्कमनर्घ्यपात्रे ।
अर्घ्यं ददावहमियं तनया ग्रहास्ते
गावो हिरण्यमखिलं भवदीयमूचे ॥ ५० ॥

अस्माकमद्य पवितं कुलमादृताः स्म
सन्दर्शनं परिणयव्यपदेशतोऽभूत् ।
नो चेद्भवान् बहुविदग्रसरः क्व चाहं
भद्रेण भद्रमुपयाति पुमान्विपाकात् ॥ ५१ ॥

यद्यद्गृहेऽत्र भगवन्निह रोचते ते
तत्तन्निवेद्यमखिलं भवदीयमेतत् ।
वक्ष्यामि सर्वमभिलाषपदं त्वदीयं
युक्तं हि सन्ततमुपासितवृद्धपूगे ॥ ५२ ॥

---

[1] अ. संप्रार्थितं ।   [2] अ उपयान्तम् ।

एवं मिथः परिणिगद्य विशेषमृद्धी
वाचायुतौ मुदमवापतुरुत्तमां तौ ।
अन्ये च संमुमुदिरे प्रियसत्कथाभिः
स्वेच्छाविहारहसनैरुभयोर्विधेयाः ॥ ५३ ॥

कन्यावरौ प्रकृतिसिद्धसुरूपवेषौ
दृष्ट्वा द्वयेऽपि परिकर्म विलम्बमानाः ।
चक्रुर्विधेयमिति [1] कृत्यमनीश्वरास्ते
शोभाविशेषमपि मङ्गलवासरेऽस्मिन् ॥ ५४ ॥

एतत्प्रभाप्रतिहतात्मविभूतिभावात्
आकल्पजातमपि नातिशयं वितेने ।
लोकप्रसिद्धिमनुसृत्य विधेयबुद्ध्या
भूषां व्यधुरतदुभये न विशेषबुद्ध्या ॥ ५५ ॥

मौहूर्तिका बहुविदोऽपि मुहूर्तकालं
अप्राक्षुरक्षतधियं [2] किल तां [3] सखीभिः ।
पश्चात्तदुक्तशुभयोगयुते शुभांशे
मौहूर्तिकाः स्वमतितो जगृहुर्मुहूर्तम् ॥ ५६ ॥

जग्राह पाणिकमलं हिममित्रसूनुः
श्रीविष्णुमित्रदुहितुः करपल्लवेन ।
भेरीमृदङ्गपटहाध्ययनाब्जघोषै-
र्दिङ्मण्डलेषु परिमूर्छति [4] दिव्यकाले ॥ ५७ ॥

यं यं पदार्थमभिकामयते पुमान्यः
तं तं प्रदाय समतूतुषतां तदीयौ ।
देवद्रुमाविव महासुमनस्त्वयुक्तौ
संभूषितौ सदसि चेरतुराप्तलाभौ ॥ ५८ ॥

---

[1] अ. कर्तुं । [2] अ. खलु ।
[3] का. सखीभ्यः । [4] अ. दानकाले ।

आधाय वह्निमथ तत्र जुहाव सम्य-
गृह्योक्तमार्गमनुसृत्य स विश्वरूपः ।
लाजान् जुहाव च वधूः परिजिघ्रति स्म
धूमं प्रदक्षिणमथाकृत सोऽपि चाग्निम् ॥ ५९ ॥

होमावसानपरितोषितविप्रवर्यैः
प्रस्थापिताखिलसमागतबन्धुवर्गः ।
संरक्ष्य वह्नि[1]ममुया सममग्निगेहे
दीक्षाधरो दिनचतुष्कमुवास हृष्टः ॥ ६० ॥

प्रातिष्ठमाने दयिते वरेऽस्मि-
न्नुपेत्य मातापितरौ वराय ।
अभाषिषातां शृणु सावधानो
बालैव बाला न तु वेत्ति किञ्चित् ॥ ६१ ॥

बालैरियं क्रीडति कन्दुकाद्यै-
र्जातक्षुधा गेहमुपैति दुःखात् ।
एकेति बाला गृहकर्म नोक्ता
संरक्षणीया निजपुत्र[2]तुल्यम् ॥ ६२ ॥

बालेयमङ्ग वचनैर्मृदुभिर्विधेया
कार्या न रूक्षवचनैर्न करोति रुष्टा ।
केचिन्मृदूक्तिवशगा विपरीतभावाः
केचिद्विहातुमनलं प्रकृतिं जनो हि ॥ ६३ ॥

कश्चिद्द्विजातिरधिगम्य कदाचिदेना-
मुद्वीक्ष्य लक्षणमवोचदनिन्दितात्मा ।
मानुष्यमात्रजननं निजदेहभावे-
त्यस्माच्च वो वचनमुग्रमयोज्यमस्याम् ॥ ६४ ॥

---

[1] अ. अनया ।     [2] अ. तुल्या ।

सर्वज्ञतालक्षणमस्ति पूर्णमेषा कदाचिद्वदतोः कथायाम् ।
तत्साक्षिभावं व्रजितानवद्या सन्दिश्य नावेवमसौ जगाम
॥ ६५ ॥

श्वश्रूर्वराया वचनेन वाच्या
स्नुषाभिरक्ष्या यतते हि तस्याम् ।
निक्षेपभूता तव सुन्दरीयं
कार्या गृहे कर्म शनैः शनैस्ते ॥ ६६ ॥

बालेषु बाल्यात्सुलभोऽपराध-
स्स नेक्षणीयो गृहिणीजनेन ।
वयं सुतीभूय हि सर्व एव
पश्चाद्गुरुत्वं शनकैः प्रयाताः ॥ ६७ ॥

दृष्टाभिधातुश्च मनोऽस्मदीयं?
गेहाभिरक्षणविधौ न हि दृश्यतेऽन्यः ।
दृष्टाभिधानफलमेव भवेद्यथा नौ
भूयात्तदेष्टजनतां जननीं वरस्य ॥ ६८ ॥

वत्से त्वमद्य गमितासि दशामपूर्वां
तद्रक्षणे निपुणधीर्भव सुभ्रु नित्यम् ।
कुर्यान्न बालविहृतिं जनतोपहास्यां
सा नाविवापरमियं [1] परितोषयेत्ते ॥ ६९ ॥

पाणिग्रहात्स्वामियुतं समीरितं
पुरा कुमार्याः पितरौ ततः परम् ।
पतिस्तमेकं शरणं व्रजानिशं
लोकद्वयं जेष्यसि येन दुर्जयम् ॥ ७० ॥

---

[1] अ. परिपोषयेत्ते ।

पत्यावभुक्तवति सुन्दरि माशु भुङ्क्थाः
याते प्रवासमपि मा स्म भवद्विभूषा ।
पूर्वापरादिनियमोऽस्ति निमज्जनादौ
वृद्धाङ्गनाचरितमेव परं प्रमाणम् ॥ ७१ ॥

रुष्टे धवे ह युयुजे ह न वाच्यमेकं
क्षन्तव्यमेव निखिलं स तु शाम्यतीत्थम् ।
तस्मिन्प्रसन्नवदने [1] चकितेव वग्धि
सिद्ध्यत्यभीष्टमनघे क्षमयैव सर्वम् ॥ ७२ ॥

भर्तुस्समक्षमपि तद्वदनं समीक्ष्य
वाच्यो न जातु सुभगे परपूरुषस्ते ।
किं वाच्य एष रहसीतिं तवोपदेश-
श्शङ्का वधूपुरुषयोः क्षपयेद्धि हार्दम् ॥ ७३ ॥

आयाति भर्तरि तु पुत्रि विहाय कार्य-
मुत्थाय शीघ्रमुदकेन [2] पदावनेन ।
कार्यं यथाभिरुचितं सति जीवनं वा
नोपेक्षणीयमणुमात्रमपीह कान्ते ॥ ७४ ॥

धवे परोक्षेऽपि कदाचिदेयुर्गृहं तदीया अपि वा महान्तः ।
ते पूजनीया बहुमानपूर्वं नो चेत् निराशाः कुलदाहकाः
स्युः ॥ ७५ ॥

पित्रोरिव श्वशुरयोरनुवर्तितव्यं
तद्वन्मृगाक्षि सहजेष्विव देवरेषु ।
ते स्नेहिनोऽपि कुपिता इतरेतरस्य
योगं विभिन्द्युरिति मे मनसि प्रतर्कः ॥ ७६ ॥

---

[1] अ. चकिते च भद्रे ।; का. चकितेव भूयाः ।
[2] अ. अनेजः ।; का. वसेकम् ।

हितोपदेशे विनिविष्टमानसौ
वधूवरौ राजपुरं समीयतुः ।
लब्धानुमानौ गुरुबन्धुवर्गतो
बभूव संज्ञोभयभारतीति ॥ ७७ ॥

सा भारती चुलुकिते भगवत्पदस्य
हस्ते जलं समदिता [1] च्छमनोहराङ्गी ।
तस्थौ मुनेस्तदनु कारणमानुषस्य
मूर्तिं शिवस्य मुदिता समुदीक्षमाणा ॥ ७८ ॥

पाथश्चिरं संदधदेव शङ्करो
न चापिबन्नापि मुमोच चिन्तया ।
तदा मनः क्षोभमियाय गेहिनः
किमेतदासीदिति चिन्तयाकुलम् ॥ ७९ ॥

भृत्यापराधोऽयमथात्मनो वा
केनेदमानायि जलं कुतो वा ।
को वार्पिपद्भिक्षुपदेऽमलेऽस्मिन्
न चिन्तयन् हेतुमवैक्षतासौ ॥ ८० ॥

आनायि चैत्रेण जलं सरस्या-
स्समार्पिपत्सोभयभारतीति ।
अवादिषुस्तत्र जनास्समक्षं
ततश्शशङ्के किल विश्वरूपः ॥ ८१ ॥

नागस्कृतः परिजना न जलं न पेयं
पानीयमेव भवति ध्रुवमस्य कोपः ।
जायेत सस्मितमुखं मुनिमेनमीक्षे
हेत्वन्तरं न च यतोऽस्य पयः प्रकल्प्यम् ॥ ८२ ॥

---

[1] अ. अतिमनोहराङ्गी ।

इत्थं विचिन्त्य मुनिमेव पुनः प्रपेदे
निर्बन्धतोऽस्य मुनिराख्यदमुष्य हेतुम् ।
कार्यं ममास्ति यदि चात्र भवान्विदध्यात्
भुञ्जेऽन्नमक्षयमिदं प्रपिबामि पाथः ॥ ८२ ॥

कुर्वे तदत्र भवने यदि शक्यमेतत्
कर्तुं ब्रवीतु तदशङ्कितमेव भिक्षो ।
सार्धं त्वया वदितुमिच्छति मे मनोऽर्हन्
तच्चेत्प्रदास्यति भवान्प्रपिबामि पाथः ॥ ८३ ॥

[1] अत्यन्तमेतद्भवतेरितं मुने
पास्यामि पाथो यदि वाददित्सुता
कृतोद्यमोऽहं श्रुतवादवार्तया
चिरेप्सितोऽयं वदिता न कश्चन ॥ ८४ ॥

वादं करिष्यामि न सन्दिहेऽत्र
जयाजयौ नौ वदिता न कश्चित् ।
न कण्ठशोषैकफलो विवादो
मिथो जिगीषू कुरुतस्तु वादम् ॥ ८५ ॥

वादे हि वादिप्रतिवादिनौ द्वौ
विपक्षपक्षग्रहणं विधत्तः ।
का नौ प्रतिज्ञा वदतोश्च तस्यां
किं मानमिष्टं वद किंस्वभावम् ॥ ८६ ॥

कः प्राश्निकोऽहं गृहमेधिसत्तम-
स्त्वं भिक्षुराजो वदतामनुत्तमः ।
जयाजयौ नौ सपणौ विधीयतां
ततः परं साधु वदाव सस्मितौ ॥ ८७ ॥

---

[1] अ॰ अत्यल्पं ।

श्रीविश्वरूपेण समीरितं वचः
श्रुत्वा मुनीन्द्रो मुदितोऽमृतं पपौ ।
पीत्वा यथेष्टं बुभुजेऽमृताशनं
सरस्वती सार्पयति स्म शोभना ॥ ८९ ॥

सुखोपविष्टस्य विधाय भिक्षां
पदे गृहीत्वानुमतस्स तेन ।
अभुङ्क्त शिष्टाशनमिष्टभोजी
पश्चादभुङ्क्तोभयभारती सा ॥ ९० ॥

ब्रह्मैकं परमार्थसच्चिदमलं विश्वप्रपञ्चात्मना
शुक्ती रूप्यपरात्मनेव बहुलाज्ञानावृतं भासते ।
तज्ज्ञानान्निखिलप्रपञ्चविलयात्स्वात्मन्यवस्था परं
निर्वाणार्जनमुक्तमभ्युपगतं मानं श्रुतेर्मस्तकम् ॥ ९१ ॥

बाढं जये यदि पराजयभागहं स्यां
संन्यासमङ्ग परिहृत्य कषायचैलम् ।
शुक्लं वसीय वसनं द्वयभारतीयं
वादे [1]पराजयजयप्रतिपादिकास्तु ॥ ९२ ॥

इत्थं प्रतिज्ञां कृतवत्युदारां
श्रीशङ्करे भिक्षुवरे स्वकीयाम् ।
स विश्वरूपो गृहमेधिवर्य-
श्चक्रे प्रतिज्ञां स्वमतप्रतिष्ठाम् ॥ ९३ ॥

वेदान्तो न प्रमाणं त्वतिवपुषि पदे तत्र [2]संपत्तियोगात्
पूर्वो भागः प्रमाणं पदचयगमिते कार्यवस्तुन्यशेषे ।
शब्दानां कार्यमात्रं प्रति समधिगता शक्तिरभ्युन्नतानां
कर्मभ्यो मुक्तिरिष्टा तदिह तनुभृतामायुषः स्यात्समाप्तिः
॥ ९४ ॥

---

[1] क. जयाजयफलप्रतिपादिकास्तु । [2] अ. सम्पत्प्रयोगात् ।

वादे कृतेऽस्मिन्यदि मे पराजय-
स्त्वयोदितात्स्यौद्विपरीतभावः ।
येयं त्वयाऽभूद्गदितात्र[1] साक्ष्ये
जानाति चेत्सा भविता वधूर्मम ॥ ९५ ॥

[2]इति प्रतिज्ञां [3]सपणां विधाय
वादं व्यधत्तां किल देशिकेन्द्रौ ।
कृत्वा तु वाणीमथ साक्षिभावे
जयाजयप्राप्तिविधानदक्षाम् ॥ ९६ ॥

आवश्यकं परिसमाप्य दिनेदिने तौ
वादं समं व्यतनुतां किल सर्ववेदौ ।
एवं विजेतुमनसोरुपविष्टयोस्तां
मालां गले व्यधित सोभयभारतीयम् ॥ ९७ ॥

माला यदा मलिनभावमुपैति कण्ठे
यस्यापि तस्य विजयेतरनिश्चयः स्यात् ।
उक्त्वा गृहं गतवती गृहकर्मसक्ता
[4]भिक्षाशने वितरितुं गृहिमस्करिभ्याम् ॥ ९८ ॥

अन्योन्यसञ्जयफले विहितादरौ तौ
वादं [5]विवादपरिनिर्णयमात्रनिष्ठम् ।
ब्रह्मादयस्सुरवरा अपि वाहनस्थाः
श्रोतुं तदीयसदनं स्थितवन्त ऊर्ध्वम् ॥ ९९ ॥

दिनेदिने वासरमध्यमे सा
ब्रूते पतिं भोजनकालमेव ।
समेत्य भिक्षुं समयश्च भैक्षे
दिनान्यभूवन्निति पञ्चषाणि ॥ १०० ॥

---

[1] का. गदिता प्रसाक्ष्ये ।
[2] अ. इत्थं ।
[3] अ. सपणं ।
[4] का. भिक्षाशनेऽपि कलितुं ।
[5] क. विवादपदनिर्णयमातनिष्ठाम् ।; का. विवादपणनिर्णयमातनिष्ठाम् ।

अन्योन्यमुत्तरमखण्डयतां [1] प्रगल्भौ
बद्धासनौ स्मितविकासिमुखारविन्दौ ।
न स्वेदवारिगगनेक्षणशालिनौ वा
न क्रोधवाक्छलमवादि निरुत्तराभ्याम् ॥ १०१ ॥

सा सप्तमे दिन उपेत्य सरस्वती तौ
संवीक्ष्य भिक्षितुमभूदुभयो [2] रनेहा ।
उक्त्वेत्थमादरधिया वचनं स्वभर्तु-
रन्तर्दधे [3] सुवदना किल शापमुक्ता ॥ १०२ ॥

स विश्वरूपो बत सत्यवादी
पपात पादाम्बुजयोर्यतीशः ।
गृहं शरीरं मम यच्च सर्वं
तवेतिवादी मुदितो महात्मा ॥ १०३ ॥

सन्न्यासपूर्वं विधिवद्विभिक्षे
पश्चादुपादिक्षदथात्मतत्त्वम् ।
आचार्यवर्यः श्रुतिमस्तकस्थं
तदादिवाक्यं पुनराबभाषे ॥ १०४ ॥

भूभृद्देहनिवेशनं गृहपतेर्गेहस्थभिक्षा क्रिया
वागीशाजनिपाणिपीडनमथो वादश्च तत्साक्षिकः ।
यत्राऽभाणि च [4] शङ्करेऽत्र विजये व्यासाचलप्रोदिते
षष्ठस्सर्ग उपारमद्बहुकथासम्बन्धहृद्योऽनघः ॥ १०५ ॥

। इति श्रीशङ्करविजये व्यासाचलीये
षष्ठस्सर्गः ।

---

[1] का. प्रगल्भं ।
[2] का. रनेहाः ।
[3] का. सुवसना ।
[4] अ. शङ्करेन्द्रविजये ।

## ॥ अथ सप्तमस्सर्गः ॥

---

त्वं नासि देहो घटवद्ध्यनात्मा
रूपादिमत्त्वादिह जातिमत्त्वात् ।
ममेति भेदप्रथनादभेद-
संप्रत्ययं विद्धि विपर्ययं भोः ॥ १ ॥

लोप्यो हि [1]लोपव्यतिरिक्तलोपको
दृष्टो घटादिः किल तादृशी तनुः ।
दृश्यत्वहेतोर्व्यतिरेकसाधने
ततश्शरीरे कथमात्मतागतिः ॥ २ ॥

नापीन्द्रियाणि खलु तानि च साधनानि
दात्रादिवत्कथममीषु तवात्मभावः ।
चक्षु[2]र्मदीयमिति भेदगतेरमीषां
रूपादिभावविरहाच्च घटादिसाम्यम् ॥ ३ ॥

यद्यात्मतैषां समुदायगा स्यात्
एकव्ययेनापि भवेन्न तद्धीः ।
प्रत्येकमात्मत्वमुदीर्यते चेत्
नश्येच्छरीरं बहुनायकत्वात् ॥ ४ ॥

आत्मत्वमन्यतमगं यदि चक्षुरादे-
श्चक्षुर्विनाशसमये स्मरणं न हि स्यात् ।
एकाश्रयत्वनियमात्स्मरणानुभूत्यो-
र्दृष्टश्रुतार्थविषयाधि[4]गतिश्च न स्यात् ॥ ५ ॥

---

[1] का. लोप्य ।
[2] अ. ममेदमिति ।
[3] अ. वगतिश्च ।

मनोऽपि नात्मा करणत्वहेतो-
र्मनो मदीयं गतमन्यतोऽभूत् ।
इति प्रतीतेर्व्यभिचारितायाः
[1]सुप्तावतश्चिन्मनसो विभक्ता ॥ ६ ॥

अनयैव दिशा निराकृता
ननु बुद्धेरपि चात्मता स्फुटम् ।
अपि [2]भेदगतेरनन्वयात्
करणादावपि [3]बुद्धिमुज्झ भोः ॥ ७ ॥

नाहङ्कृतेरात्मपदप्रवादात्
प्राणा मदीया इति लोकवादात् ।
प्राणोऽपि नात्मा भवितुं प्रगल्भ-
स्सर्वोपसंहारिणि[हि]सत्सुषुप्ते ॥ ८ ॥

एवं शरीरादिविविक्त आत्मा
त्वंशब्दवाच्योऽभिहितोऽत्र वाक्ये ।
तदोदितं ब्रह्म जगन्निदानं
तथा तदैक्यं पदयुग्मबोध्यम् ॥ ९ ॥

कथं तदैक्यं प्रतिपादयेद्वच-
स्सर्वज्ञसंमूढपदाभिषिक्तयोः ।
न ह्येकता संतमसप्रकाशयोः
संदृष्टपूर्वा न च दृश्यतेऽधुना ॥ १० ॥

सत्यं विरोधगतिर[4]स्तु तु वाच्यगेयं
सोऽयं पुमानितिवदत्र विरोधहानेः ।
आदाय वाच्यमविरोधि पदद्वयं त-
ल्लक्ष्यैक्यबोधनपरं ननु को विरोधः ॥ ११ ॥

---

[1] अ. सुप्तौ च तच्चिन्मनसो विविक्ता ।
[2] का. रनन्यथात्वात् ।
[3] का. बुद्धिरुच्यते ।
[4] अ. अस्ति ।

[1]जहीहि देहाधिगतामहंधियं
चिरार्जितां कर्मचयैस्सुदुस्त्यजाम् ।
विवेकबुद्ध्या परमेव सन्ततं
ध्यात्वात्मभावेन यतो विमुक्तता ॥ १२ ॥

साधारणे वपुषि काकशृगालवह्नि-
मात्रादिकस्य ममतां त्यज दुःखहेतुम् ।
तद्वज्जहीहि बहिरर्थगताञ्च विद्वन्
चित्तं बधान परमात्मनि निर्विशङ्कम् ॥ १३ ॥

तीरात्तीरं सञ्चरन् दीर्घमत्स्यस्तीराद्भिन्नो लिप्यते नापि तेन ।
एवं देही सञ्चरन् जाग्रदादौ तस्माद्भिन्नो [2]नापि तद्धर्मको वा
॥ १४ ॥

जाग्रत्स्वप्नसुषुप्तिलक्षणमिदं[3] स्थानत्रयं चिन्तने
त्वय्येवानुगते मिथोऽव्यभिचरद्धीसंज्ञमज्ञानतः ।
क्लृप्तं रज्जिवदंशके वसुमती छिद्रादिदण्डादिवत्
तद्भ्राति तुरीयमुच्छिन्नभयं मा त्वं पुरेव भ्रमीः ॥ १५ ॥

[4]प्रत्यक्तमः परपदं विदुषोऽन्तिकस्थं
दूरं तदेव परिमूढमतेर्जनस्य ।
अन्तर्बहिश्च चितिरस्ति न वेत्ति कश्चित्
चिन्वन्बहिर्बहिरहो महिमात्मशक्तेः ॥ १६ ॥

यथा प्रपायां बहवो मिलन्ति
क्षणे द्वितीये बत भिन्नमार्गाः ।
प्रयान्ति [5]तद्वद्बहुमानभाजो
गृहे भवन्त्यत्र न कश्चिदन्ते ॥ १७ ॥

---

[1] का. जहीहि देहादिगतां ।
[2] का - नापगाधर्मको वा ।
[3] अ. पदेऽवस्थात्रयं चित्तनौ ।
[4] का. प्रत्युत्तमं ।
[5] अ. नाम ।

सुखाय [1] तैर्यत्क्रियते दिवानिशं
सुखन्न किंचिद्बहुदुःखमेव तत् ।
विना न हेतुं सुखजन्म दृश्यते
हेतुश्च हेत्वन्तरसन्निधौ भवेत् ॥ १८ ॥

परिपक्वमतेस्सकृच्छ्रुतं जनयेदात्मधियं श्रुतेर्वचः ।
परिमन्दमतेश्शनैश्शनैर्गुरुपादाब्जनिषेवणादिना ॥ १९ ॥

प्रणवाभ्यसनोक्तकर्मणोः करणेनापि गुरोर्निषेवणात् ।
अपगच्छति मानसं मलं क्षमते तत्त्वमुदीरितं ततः ॥ २० ॥

[2] मनोऽनुवर्तेत दिवानिशं गुरुं
गुरुर्हि साक्षाच्छिव एव तत्त्ववित् ।
निजानुवृत्त्या परितोषितो गुरु-
र्विनेयवक्त्रं कृपया [3] हि वीक्षते ॥ २१ ॥

सा कल्पवल्लीव निजेष्टमर्थं
फलत्यवश्यं किमकार्यमस्याः ।
आज्ञा गुरोस्सम्परिपालनीया
सा मोदमानाय विधातुमिष्टम् ॥ २२ ॥

गुरूपदिष्टा निजदेवता चेत्
कुप्येत्तदा पालयिता गुरुः स्यात् ।
रुष्टे गुरौ पालयिता न कश्चिन
गुरौ न [4] तस्माज्जनयेत कोपम् ॥ २३ ॥

पुमान् पुमर्थं लभते [5] विचोदितं
भजन्ननर्थं प्रतिषिद्धसेवनात् ।
विधिं निषेधश्च निवेदयत्यसौ
गुरोरनिष्टच्युतिरिष्टसम्भवः ॥ २४ ॥

---

[1] अ. यद्यत्क्रियते ।
[2] अ. मनः प्रवर्तेत ।
[3] अ. अभिवीक्षते ।
[4] अ. जनयीत ।
[5] अ. हि ।

आराधितं दैवतमिष्टमर्थं
ददाति [1]तस्याधिगमो गुरोस्स्यात् ।
नो चेत्कथं वेदितुमीश्वरोऽय-
मतीन्द्रियं दैवतमिष्टदं [2] नः ॥ २५ ॥

तुष्टे गुरौ तुष्यति देवतागणो
रुष्टे गुरौ रुष्यति देवतागणः ।
सदात्मभावेन [3]समस्तदेवताः
पश्यन्नसौ सर्वमयो हि देशिकः ॥ २६ ॥

एवं [4]पुराणगुरुणा परमार्थतत्त्वं
शिष्टो गुरोश्चरणयोर्निपपात तस्य ।
धन्योऽस्म्यहं तव [5]गुरो करुणाकटाक्ष-
पातेन पातिततमा इति भाषमाणः ॥ २७ ॥

मम यत्करणीयमस्ति ते त्वमिमं मामनुशाध्यसंशयम् ।
तदिदं पुरुषस्य जीवितं यदयं जीवति भक्तिमान्गुरौ ॥ २८ ॥

इतीरिते शिष्यवरेण शिष्यं
प्रोचे गरीयानतिहृष्टचेताः ।
मत्कस्य भाष्यस्य विधेयमिष्टं
निबन्धनं वार्तिकनामधेयम् ॥ २९ ॥

दृष्टं सतर्कं भवदीयभाष्यं
गभीरवाक्यं न ममास्ति शक्तिः ।
तथापि भावत्ककटाक्षपातै-[6]
र्यते यथाशक्ति निबन्धनाय ॥ ३० ॥

---

[1] अ. अधिकृतो गुरुः ; क. तत्राधिकदो गुरुः स्यात् ।
[2] अ. मिष्टदं नो ; का. मिष्टदाने ।
[3] अ. देवता ।
[4] अ. ब्रुवाण ।
[5] अ. गुरोः ।
[6] का. पाते यते ।

अथागमच्छिष्यगणस्तदीयस्ततस्ततशिष्यगणास्तदीयाः[1] ।
श्रुत्वा जितं त्यक्तसमस्तशेषं श्रीविश्वरूपस्य मुदं दधानाः ॥३१॥

दृष्ट्वा गुरुं ते क्रमतः प्रणेमुस्तदीयपादाब्जरजो दधानाः ।
परस्परश्चाददिरे ददुश्च नमस्कृतिं दर्शनहृष्टचित्ताः ॥ ३२ ॥

कतिपयानि दिनानि न पश्यतो गुरुपदाब्जमभूद्युगसंमिता ॥
[2]अपि त्रुटिर्यतिवर्यवरस्य सा सुजनताविरहो हि सुदुस्सह
॥ ३३ ।

गुरुपदाब्जरसं पिबति स्म सा यतिजनालिरनुत्तमसारवित् ।
नयनयुग्मपुटेन निरन्तरं [3] विरहवह्नितृषैकनिराकुलाः ॥ ३४ ॥

श्रुतवती गुरुवक्त्रसरोरुहात् बहुकथाः परमात्मपदानुगाः ।
भवकथातिगता भवनाशिनीर्विगतपुण्यचयेन सुदुर्लभाः ॥३५॥

कतिपयेषु गतेषु दिनेष्वियं श्रुतवती किल भाष्यनिबन्धनम् ।
अभिनवेन करिष्यत इत्यदो यतिजनालिरसोढ न
रम्यवाक् ॥ ३६ ॥

योऽयं प्रयत्नः क्रियते हिताय हिताय नालं विफलन्त्वनर्थम् ।
प्रत्येकमेवं गुरवे निवेद्य [4] बद्धः स्वयं कर्मणि तत्परश्च ॥३७॥

यस्सार्वलौकिकमपीश्वरमीश्वराणा
प्रत्यादिदेश बहुयुक्तिभिरुत्तरज्ञः ।
कर्मैव नाकनरकादिफलं ददाति
नैवं परोऽस्ति फलदो जगतीशितेति ॥ ३८ ॥

---

[1] अ. गणस्तदीयः ।
[2] अ. तृषेव ।
[3] अ. अपि कला यति ।
[4] अ. बद्धान्, बौद्धात् । (बौद्धः स्वयं कर्मणि तत्परश्च); क. प्रत्येकमस्यगमपि ।

प्रत्येकमस्य प्रलयं वदन्ति
पुराणवाक्यानि स तस्य कर्ता ।
व्यासो मुनिर्जैमिनिरस्य शिष्य-
स्तत्पक्षपाती प्रलयावलम्बी ॥ ३९ ॥

गुरोश्च शिष्यस्य च पक्षभेदे
कथं तयोस्स्याद्गुरुशिष्यभावः ।
तथापि यद्यस्ति स पूर्वपक्ष-
स्सिद्धान्तभावस्तु गुरूक्त एव ॥ ४० ॥

आजन्मनस्स खलु कर्मणि योजितात्मा
कुर्वन्निवास्थित दिवानिशमेव कर्म ।
ब्रूते परांश्च कुरुतावहिताः प्रयत्नात्
स्वर्गादिकं सुखमवाप्नुत[1] किं वृथाऽऽध्वे ॥ ४१ ॥

एवंविधेन क्रियते निबन्धनं
यदि त्वदाज्ञामवलम्ब्य भाष्यके ।
भाष्यं परं कर्मपरं स योक्ष्यते
प्राच्यावि कालादपि वृद्धिमिच्छता ॥ ४२ ॥

संन्यासमप्येष न बुद्धिपूर्वं
व्यधत्त [2]वादेन जितोऽवशो व्यधात् ।
तस्मान्न विश्वासपदं विभाति नो
प्राचीकरोऽनेन निबन्धनं [3]गुरो ॥ ४३ ॥

यश्शक्नुयात्कर्म विधातुमीप्सितं
सोऽयं न कर्माणि विहातुमर्हति ।
यद्यस्ति संन्यासविधौ दुराग्रहो
जात्यन्धमूकादिरमुष्य गोचरः ॥ ४४ ॥

---

[1] का. वाप्स्यथ ।  [2] अ विजितो ।
[3] अ. पुरा ।

एवं सदा भट्टमतानुसारिणो
ब्रुवन्त्ययं तन्मतपक्षपातवान् ।
एवं स्थिते [1]योग्यमदो विधीयतां
न नोऽस्ति निर्बन्धनमत्र किञ्चन ॥ ४५ ॥

इत्येवमुक्त्वोपरते च शैष्ये
गणे बभाषे किल देशिकेन्द्रः
आसादितोऽयं महतः प्रयत्नात्
स चेन्न रोचेत न वीक्षतेऽन्यः ॥ ४६ ॥

अहं बहूनामनभीष्टकार्ये
न कारयिष्ये हि महानिबन्धनम् ।
किञ्चात्र संशीतिरभून्ममातो
यदेककार्ये बहवः प्रतीपाः ॥ ४७ ॥

भवन्निदेशाद्भगवान्स नन्दनः
करिष्यते भाष्यनिबन्धमीप्सितम् ।
स ब्रह्मचर्यादुररीकृताश्रमो
मतिप्रकर्षो विदितो हि सर्वतः ॥ ४८ ॥

स नन्दनो नन्दयिता जनानां
निबन्धमेकं विदधातु भाष्यके ।
न वार्तिकं तत्र परप्रतिज्ञां
[2]व्यधात्प्रतिज्ञासहितात्मदीक्षः ॥ ४९ ॥

आदिश्येत्थं शिष्यसङ्घं यतीन्द्रः
प्रोवाचेत्थं नूत्नभिक्षुं रहस्तम् ।
भाष्ये भिक्षो मा कृथा वार्तिकं त्वं
नेमे शिष्यास्तेसहिरे दुर्विदग्धाः । ५० ॥

---

[1] अ. अथो ; क. अतो ।    [2] अ. प्रतिज्ञां सहि नूत्नदीक्षः

तात्पर्यं ते गेहिधर्मेषु दृष्ट्वा
तत्संस्कारं साम्प्रतं शङ्कमानाः ।
भाष्ये कृत्वा वार्तिकं योजयेत्स
भाष्यं प्रायस्स्वीयसिद्धान्तशेषम् ॥ ५१ ॥

नास्त्येवासावाश्रमस्तुर्य इत्थं
सिद्धान्तोऽयं तावको वेदसिद्धः ।
द्वारि द्वाःस्थैर्वारितो भिक्षमाणा
वेश्मान्तस्ते न प्रवेशं लभन्ते ॥ ५२ ॥

इत्याद्यां तां किंवदन्तीं विदित्वा
तेषां नासीत्प्रत्ययस्त्वय्यनल्पे ।
स्वातन्त्र्यात्त्वं ग्रन्थमेकं महात्मन्
कृत्वा [1]मह्यं दर्शय [2]स्वात्मनिष्ठम् ॥ ५३ ॥

विद्वन्यद्वत्प्रत्ययः स्यादमीषां
शिष्याणां नो ग्रन्थसन्दर्शनेन ।
इत्थं प्रोक्तस्सोऽल्पकालेन भिक्षुः
ग्रन्थं कृत्वा दर्शयामास तस्मै ॥ ५४ ॥

ग्रन्थं दृष्ट्वा मोदमानो यतीन्द्र-
स्तश्चान्येभ्यो दर्शयामास हृद्यम् ।
तेषाञ्चासीत्प्रत्ययस्तद्वदास्मिन्
यद्वच्चान्यस्तत्त्वविद्यस्स तेन ॥ ५५ ॥

यत्राद्यापि श्रूयते मस्करीन्द्रै-
र्निष्कामात्मा यत्र नैष्कर्म्यसिद्धिः ।
तन्नाम्नायं पप्रथे ग्रन्थवर्य-
स्तन्माहात्म्यात्सर्वलोकादृतोऽभूत् ॥ ५६ ॥

---

[1] का. मार्गं ।  [2] अ. का. अध्यात्मनिष्ठम् ।

आचार्यवाक्येन विधित्सितेऽस्मिन्
विघ्नं [1]यदन्ये व्यधुरुत्ससर्ज ।
[2]शापं ततोऽस्मिन्कृतमप्युदारै-
स्तद्वार्तिकं न प्रसरेत्पृथिव्याम ॥ ५७ ॥

नैष्कर्म्यसिद्ध्याख्यनिबन्धमेकं
कृत्वात्मपूज्याय निवेद्य शप्त्वा ।
विश्वासमुत्पाद्य पुनर्बभाषे
स विश्वरूपो गुरुमात्मदैवम्[3] ॥ ५८ ॥

न ख्यातिहेतोर्न च लाभहेतो-
र्नाप्यर्चनायै विहितः प्रबन्धः ।
नोल्लङ्घनीयं वचनं गुरूणां
नोल्लङ्घने स्याद्गुरुशिष्यभावः ॥ ५९ ॥

पूर्वं गृही[4] त्वेव न तत्स्वभावो
न बाल्यमन्वेति हि [5]यौवनं तत् ।
न यौवनं वृद्धमुपैति तद्वत्
व्रजन्हि पूर्वस्थितिमौज्झच्च गच्छेत् ॥ ६० ॥

अहं गृही नात्र विचारणीयं
किं तेन पूर्वं मन एव हेतुः ।
बन्धे च मोक्षे च मनोविशुद्धो
गृही भवेद्वा उत मस्करी वा ॥ ६१ ॥

नास्त्येव चेदाश्रम उत्तमादिः
कथश्च तत्प्राप्तिनिवृत्तिकामी ।
प्रतिश्रवौ नौ कथमल्पकालौ
न हि प्रतिज्ञा भगवन्निरुद्धा[6] ॥ ६२ ॥

---

[1] अ. यदान्वे ।
[2] अ. शापं विधाता ; क. शापः कृतोऽस्मिन् कृतमप्युदारैः ।
[3] अ. देवम् ।
[4] अ. गृहींत्येव ।
[5] क. यौवनेन ।
[6] क. निरुद्धा ।

संभिक्षमाणा न लभन्त एव चे-
गृहप्रवेशं गुरुणा प्रवेशम् ।
कथं च भिक्षा विहिता निकेतने
को नाम लोकस्य [1]मुग्धाभिधायकः ॥ ६३ ॥

तत्त्वोपदेशाद्विदितात्मतत्त्वो
व्यधामहं संन्यसनं कृतात्मा ।
विरागभावान्न पराजितस्तु
वादो हि तत्त्वस्य विनिर्णयाय ॥ ६४ ॥

पुरा गृहस्थेन मया प्रबन्धा
[2]नैयायिकादौ विहिता महार्थाः ।
नातः परं मे हृदयं चिकीर्षु
त्वदङ्घ्रिसेवामतिलङ्घ्य किञ्चित् ॥ ६५ ॥

भावानुकारिमृदुवाक्यनिवेदितार्थं[3]
स्वीयैः पदैस्सह निराकृतपूर्वपक्षम् ।
सिद्धान्तयुक्तिविनिवेशिततत्स्वरूपं
दृष्ट्वाभिनन्द्य परितोषभरादवोचत् ॥ ६६ ॥

सत्यं यदात्थ [4]विनयन् मम याजुषीय-
[5]शाखा तदन्तगतभाष्यनिबन्ध इष्टः ।
तद्वार्तिकं मम कृते भवता प्रणेयं
सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥ ६७ ॥

तद्वत्त्वदीया खलु काण्वशाखा
ममापि तत्रास्ति तदन्तभाष्यम् ।
तद्वार्तिकश्चापि विधेयमिष्टं
परोपकाराय सतां प्रवृत्तिः ॥ ६८ ॥

---

[1] अ. अपिधायकः ।
[2] अ. यन्न्यायगर्भा ।
[3] अ. निवेशितार्थं ।
[4] का. विनयी ।
[5] अ. तदग्र ।

[1]अत्रोभयत्र कुरु वार्तिकमप्रधृष्यं
येनोभयोरुपनिषद्धृदयं स्फुटं स्यात् ।
मा शङ्कि पूर्वमिव दुश्शठवाक्यरोधो
मद्वाक्यमेव शरणं व्रज [2]मातिचारीः ॥ ६९ ॥

इत्थं स उक्तो भगवत्पदेन
श्रीविश्वरूपो विदुषां वरिष्ठः ।
चकार भाष्यद्वयवार्तिके द्वे
ह्याज्ञा गुरूणां ह्यविचारणीया ॥ ७० ॥

स नन्दनो नाम गुरोरनुज्ञया
भाष्यस्य टीकां व्यधितेरितः पराम् ।
यत्पूर्वभागः किल पञ्चपादिका
तच्छेषगा वृत्तिरिति प्रथीयसी ॥ ७१ ॥

स जात्वयाचिष्ट गुरोरनुज्ञां
स्वतीर्थयात्रां बहुमन्यमानः ।
देया गुरो मे भगवन्ननुज्ञा
देशान् दिदृक्षे बहुतीर्थयुक्तान् ॥ ७२ ॥

सत्क्षेत्रवासो निकटे गुरोर्वा
वासस्तदङ्घ्र्याब्जजलञ्च तीर्थम् ।
गुरूपदेशेन यदात्मवृत्ति-[3]
स्सैव प्रशस्ताखिलदेवदृष्टिः[4] ॥ ७३ ॥

शुश्रूषमाणेन गुरोस्समीपे
स्थेयं न येयं स ततोऽन्यदेशे ।
विशिष्य मार्गश्रमकर्शितस्य
निद्राभिभूत्या किमु चिन्तनीयम् ॥ ७४ ॥

---

[1] अ. तत्र । [2] अ. विचारीः ।
[3] अ. दृष्टिः । [4] अ. देशः ।

द्विधा हि संन्यास उदीरितो हि
विशुद्धतत्त्वस्य च तद्बुभुत्सोः ।
तत्त्वंपदार्थैक्य उदीरितेऽयं
यत्नात्त्वमर्थः परिशोधनीयः ॥ ७५ ॥

सम्भाव्यते क्व च जलं क्व च नास्ति पाथः
शय्यास्थलं क्वचिदिहास्ति न च क्वचास्ति ।
शय्यास्थलीजलनिरीक्षणसक्तचेताः
पान्थो न शर्म लभते कलुषीकृतात्मा ॥ ७६ ॥

ज्वरातिसारादि च रोगजालं
बाधेत चेत्तत्र च कोऽभ्युपायः ।
स्थातुञ्च गन्तुञ्च न पारयेत
तदा सहायोऽपि विमुञ्चतीमम् ॥ ७७ ॥

स्नानं प्रभाते क्व च देवतार्चनं
क्व चोक्तशौचं क्व च वा समाधयः ।
क्व चाशनं कुत्र च मित्रसङ्गतिः
पान्थो न चान्नं लभते क्षुधातुरः ॥ ७८ ॥

नास्त्युत्तरं गुरुवचस्तदपीह वक्ष्ये
सत्यं यदाह भगवान् गुरुपार्श्ववासः ।
श्रेयानिति प्रथमसंयमिनामनेकान्
देशानवीक्ष्य हृदयं न निराकुलं मे ॥ ७९ ॥

सर्वत्र न क्वापि जलं समस्ति
पश्चात्पुरस्तादथ वा विदिक्षु ।
मार्गोऽपि विद्येत न सुव्यवस्थः
सुखेन पुण्यं क्व नु लभ्यतेऽधुना ॥ ८० ॥

जन्मान्तरार्जितमघं फलदानहेतो-
र्व्याध्यात्मना जनिमुपैति न नो विवादः ।
साधारणादिह च वा परदेशके वा
कर्म ह्यभुक्तमनुवर्तेत एव जन्तुम् ॥ ८१ ॥

इह स्थितं वा परतःस्थितं वा
कालो न मुञ्चेत्समयागतश्चेत् ।
तद्देशगत्यामृत देवदत्त
इत्यादिकं मोहकृतं जनानाम् ॥ ८२ ॥

मन्वादयो मुनिवराः खलु धर्मशास्त्रे
धर्मादि [1] सङ्कुचितमाहुरतिप्रकृष्टम् ।
देशाद्यवेक्ष्य न तु तत्सरार्णिं गतानां
शौचाद्यतिक्रमकृतं प्रभवेदघं नः ॥ ८३ ॥

दैवेऽनुकूले विपिनं गतो वा
समाप्नुयाद्वाञ्छितमन्नमेषः ।
ह्रियेत नश्येदथ वा पुरस्थं
तस्मिन्प्रतीपे तत एव सर्वम् ॥ ८४ ॥

गृहं परित्यज्य विदेशगो ना
सुखं समागच्छति तीर्थदृश्वा ।
गृहं गतो याति मृतिं पुरस्तात्
[2]सदागमादत्र च किं निमित्तम् ॥ ८५ ॥

देशे कालेऽवस्थितं तद्विमुक्तं
ब्रह्मानन्दं पश्यतां तत्र तत्र ।
चित्तैकाग्र्ये विद्यमाने समाधि-
स्सर्वत्रासौ दुर्लभो नेति मन्ये ॥ ८६ ॥

---

[1] अ. आहुरिति प्रसिद्धम्; क. आहुरतिप्रवृद्धम् ।

[2] अ. तदागमात् ।

सत्तीर्थसेवा मनसः प्रसादिनी
देशस्य वीक्षा मनसः कुतूहलम् ।
क्षिणोति [1]चार्थान् स्वजनेन सङ्गम-
स्तस्मान्न कस्मै भ्रमणं विरोचते ॥ ८७ ॥

अटाट्यमानोऽपि [2]विदेशसङ्गतिं
लभेत [3]विद्वान्विदुषाभिसङ्गतिम् ।
बुधो बुधानां [4]खलु [5]मित्रमीरितं
खलेन मैत्री न चिराय तिष्ठति ॥ ८८ ॥

समीपवासोऽयमुदीरितो गुरो-
र्विदेशगं यद्धृदयेन धारयेत् ।
समीपगोऽप्येष न संस्थितोऽन्तिके
न भक्तिहीनो यदि धारयेद्धृदि ॥ ८९ ॥

सुजनस्सुजनेन सङ्गतः परिपुष्णाति मतिं शनैःशनैः ।
परिपुष्टमतिर्विवेकभाक् स्यात्, शनकैर्हेयगुणं समुज्झति ॥९०॥

यद्याग्रहोऽस्ति तव तीर्थनिषेवणायां
विघ्नो मयात्र न खलु क्रियते पुमर्थे ।
चित्तस्थिरत्वगतये विहितो निषेधो
मा भूद्विशेषगमनन्त्वतिदुःखहेतुः ॥ ९१ ॥

नैको मार्गो बहुजनपदक्षेत्रतीर्थानि याया-
श्चोराध्वानं परिहर सुखन्त्वन्यमार्गेण याहि ।
विप्राग्र्याणां वसतिविततिर्यत्र वस्तव्यमीष-
न्नो चेत्सार्धं परिचितजनैश्शीघ्रमुत्तिष्ठ [6] देशम् ॥ ९२ ॥

---

[1] अ. वार्थान् सुजनेन । [2] का. विदेशसंहतिं ।
[3] अ. विदुषोऽपि । [4] क. सुख ।
[5] का. मीरितः । [6] अ. उद्दिष्ट । का. अन्यत् त्प्रदेशम् ।

सद्भिस्सङ्गो विधेयस्स हि सुखनिचयं सूयते सज्जनानां
अध्यात्मैक्यं कथास्ते घटितबहुरसाः श्राव्यमाणाः प्रशान्तैः ।
[1]कायक्लेशं विभिन्द्युस्सततमघभिदः श्रान्तविश्रामवृक्षाः
स्वान्तश्रोत्राभिरामाः परिमृदिततृषः क्षोभितक्षुत्कलङ्काः
॥ ९३ ॥

सत्सङ्गोऽयं बहुगुणयुतोऽप्येकदोषेण दुष्टो
[2]यत्स्वान्तेऽयं तपति च परं सूयते दुःखजालम् ।
स्वस्था सङ्गो वसति समये शर्मदः पूर्वकाले
प्रायो लोके सततविमलं नास्ति निर्दोषमेकम् ॥ ९४ ॥

मार्गे वास्या न बहुदिवसान् पाथसस्सङ्ग्रहः स्यात्
तस्माद्दोषो जिगमिषितपदप्राप्तिनिघ्नस्ततः[3] स्यात् ।
[4]प्राप्योद्दिष्टं दिवससरसं तत्र कार्यस्य सिद्धे-
र्मूलाद्भ्रंशोऽप्यभिमतपदप्राप्त्यभावोऽन्यथा हि ॥ ९५ ॥

मार्गे चोरा निकृतिवपुषस्संवसेयुस्सहैव
छन्नात्मानो बहुविधगुणैस्संपरीक्ष्याः प्रयत्नात् ।
दैवं वस्त्रं लिखितमथ वा दुर्विधा नेतुकामा
विश्वासोऽतोऽपरिचितनृषु प्रोज्झनीयो न कार्यः ॥९६॥

मध्येमार्गं योजनाभ्यन्तरे वा
तिष्ठेयुश्चेद्भिक्षवस्तेऽभिगम्याः ।
पूज्याः पूज्यास्तद्व्यतिक्रान्तिरुष्टाः
श्रेयःकार्यं निष्फलीकर्तुमीशाः ॥ ९७ ॥

इत्थं गुरोर्मुखगुहोदितवाक्सुधां तां
आपीय हृष्टहृदयस्सुमुखः[5] प्रतस्थे ।
आट क्षितिं बहुविधां प्रयतान्तरात्मा
तीर्थेषु तीर्थकवरो व्रजितो न्यमाङ्क्षीत् ॥ ९८ ॥

---

[1] का. ध्यायन्तीशं विभिन्द्युः सततभयमिदः ।
[2] अ. यत्स्वान्तोऽयं । [3] का. विघ्न ।
[4] अ. पाथोदिष्टं निवस । [5] अ. स मुनिः ।

आससाद शनकैर्दिशं मुने-
यस्य जन्म वसुधा घटी स्मृता ।
संस्मृतिस्सकलरोगनाशिनी
योऽपिबज्जलधिमेकबिन्दुवत् ॥ ९९ ॥

अद्राक्षीत्सुभगा हि भूषिततनुः श्रीकालहस्तीश्वरं
लिङ्गे सन्निहितं दधानमनिशं चान्द्रीं कलां मस्तके ।
पार्वत्या करुणारसार्द्रमनसा श्लिष्टं प्रमोदास्पदं
देवैरिन्द्रपुरोगमैर्जय जयेत्याभाष्यमाणं मुनिः ॥ १०० ॥

स्नात्वा सुवर्णमुखरीसलिलाशयेऽन्त-
र्गत्वा पुनः प्रणमति स्म शिवं भवान्या ।
आनर्च भावकुसुमैर्मनसा नुनाव
स्तुत्वा च तं पुनरयाचत तीर्थयात्राम् ॥ १०१ ॥

श्रीकालहस्तिपपदात्पुनराव्रजत्स
काञ्चीपुरं पुरवरं मुनिराजगाम ।
निर्वाणधाम कथयन्ति महाव्रता यत्
संसारसागरमनुत्तरमुत्तितीर्षोः ॥ १०२ ॥

कष्टो दुष्टो भूसुरो वानरो वा
विट् शूद्रो वा चान्त्यजोऽनन्त्यजो वा ।
आसाद्येदं क्षेत्रवर्यं शरीरं
त्यक्त्वाऽऽप्नोति व्यक्तमन्ते विमुक्तिम् ॥ १०३ ॥

अनेकजन्मप्रदकर्म कृत्वा
पुमान् विमुक्तः खलु पुण्यलेशात् ।
आगत्य सत्क्षेत्रमिदं वितन्वन्
नाशं तनोरन्त उपैति मुक्तिम् ॥ १०४ ॥

असंशयं निर्वृतिरेव पुंसां
क्षेत्रान्तराले त्यजतां शरीरम् ।
अन्तश्शिरा बाह्यगरिष्ठदेहो
मृतोऽपि निर्वाणपदं प्रयाति ॥ १०५ ॥

कश्चित्पुराऽमृत पुरे कृतसन्निवेशः
तं चोभयेऽपि परिवव्रुरथाच्युतीयाः ।
याम्याश्च नेतुमनसस्तमिदं स्वधाम
जित्वा मिथः स्वपतिशासनभीरवस्ते ॥ १०६ ॥

सन्धौ मुमूर्षोरुपशीर्षमेके
यमस्य दूता बहिरेव विष्ठाः ।
अन्योन्यमेषां कलहो बभूव
जिघृक्षतामेकमनेकरूपम् ॥ १०७ ॥

सर्वस्य गात्रस्य शिरः प्रधानं
शिरो निधायामृत पूरुषोऽत्र ।
मृतोऽस्मदीयो न विचार्य किञ्चित्
मा कार्ष्ट मूढाः [1] परिशासनाज्ञाः ॥ १०८ ॥

अन्तर्मृतो वा बहिरेव वा स्यात्
मृतस्य सर्वस्य यमोऽधिपो हि ।
स ह्येवमाशास्ति दिनेदिनेऽस्मान्
मृतानमूनानयतेति शीघ्रम् ॥ १०९ ॥

[2] मर्ता जन्तुर्बहुविधविधि [3] र्नारकस्थानमेति
स्वर्गं लोकं सुकृतवशगोऽप्येति नैकान्त एषः ।
हीने देशे बत मृतवतां प्रेतपः स्यान्नियन्ता
नायं वस्तुं भवति दिनगृहे योग्यतावान् कथञ्चित्
॥ ११० ॥

---

[1] का. पतिशासनाज्ञाः ।
[2] अ. मर्त्यो ।
[3] अ. गतिर्नारकं ।

अपसरत सुदूरं दूतका नात्र कार्यं
पृथुतरदृढमुष्ट्या ताडनं वः प्रदद्मः ।
सरसिजनयनो नश्शासिता शास्ति कालं
वयमिह भवतां नो कारकाः शासनस्य ॥ १११ ॥

व्यापन्नतोऽयं बहुकण्टकायां
क्षितौ न हीनो बहुपातकश्च ।
मुक्त्वैनमस्मात्प्रभवो न गन्तुं
क्रुध्येद्यमोऽस्मभ्यमनिन्दितात्मा ॥ ११२ ॥

निर्वाणकाले शिवनामकीर्तनं
[1]नारायणस्य स्मरणञ्च नाद्य ।
निर्याति पापाधमपूरुषोऽयं
तस्मात्कथं संयमिनीं न पश्येत् ॥ ११३ ॥

अन्तस्सन्धौ तनुविगलने निर्वृतिः प्राप्यतेऽद्धा
काश्यां कश्चिन्नर इह तनुं त्यक्तवांश्चेत्स किं न ।
[2]मुक्तो मुक्तेस्समय इव वा क्षेत्रभावस्तयोस्स्यात्
काशीकाञ्च्योरिह मृतहृतौ योग्यता वो न काचित्
॥ ११४ ॥

सत्यं मुक्तिर्भवति न चिरात्तारकब्रह्मदेशात्
काश्यां पुंसस्समतनुलतां वैधवीं बिभ्रते च ।
तद्वन्मुक्तिप्रसरणगतिर्नास्ति चेदाप्तवाक्यात्
कस्मात्साम्य [3] वदत युगले नास्ति तस्माद्धरामः ॥११५॥

सत्यं विशेषोऽत्र विनोपदेशं
प्रपद्यते ब्रह्मपदं पुमान्यत् ।
काञ्ची महिम्नैव ददाति मुक्तिं
मृताय सम्पत्तियुतं तदन्यत् ॥ ११६ ॥

---

[1] अ. णानु ।
[2] अ. मुक्तौ मुक्ते सम इव वरक्षेत ।
[3] का. वरदयुगले ।

यद्यप्यनेन बहुजन्मफलप्रदानि
सम्पादितानि बहुजन्मसु दुष्कृतानि ।
भस्मीकृतानि कृतनिष्कृतिकानि तानि
काञ्चीपुरेऽत्र मरणेन सुदुर्लभेन ॥ ११७ ।

अथापसस्रुर्विजिता निरुत्तरा
यमस्य दूतास्त्रपया पराङ्मुखाः ।
किमद्य नः प्रेतपतिः करिष्यते
ऽकृतात्मकार्यानिति चिन्तयाऽऽकुलाः ॥ ११८ ॥

अथ ययू रुषिता यमकिङ्कराः
स्वपतिमेव पराभवलज्जिताः ।
सरसिजाक्षजनैरभिपीडिताः
निजगदुर्हरिपूरुषचेष्टितम् ॥ ११९ ॥

अमृत देव नरो रशनापुरे
हरिजनैरजनीह विवादिता ।
उपनिधाय शिरोऽन्तरधात्तनुं
पुरवरस्य [1] बहिष्युपदिष्ट सः ॥ १२० ॥

इह निनीषुरयं जन आगम-
द्धरिजनः [2] स्वपुराद्विहितोद्यमः ।
[3] स्वभवनाय निनाय बलादमुं
तव जनस्तव [4] पार्श्वमुपागतः ॥ १२१ ॥

किमु विधेयमतः परमीयुषां
परिजनः प्रभुशासनगोचरः ।
न च विधातुमनीरितमीश्वराः
स्वमतिवैभवतो मतिदुर्विधाः ॥ १२२ ॥

---

[1] का· पुनर्हुयपदिश्य सः ।
[2] अ· व्ययः ।
[3] अ· स्वभवनं स ।
[4] अ· मुपागमत् ।

स तु जनो नयति स्म मृतं पुरे
　हरिबलाश्रयणेन निगर्वितः ।
हरिजनाभ्न पराजितिरस्ति व-
　स्स हि [1]पतिर्जगतोऽस्य ममापि च ॥ १२३ ॥

किमपि नेच्छति कर्तुमुदारधी-
　[2]स्सति नये तदतिक्रमणेन सः ।
यदि करोति तथापि [3]समीक्ष्य तं
　हरिगुरुं सहनीयमुपाहितम् ॥ १२४ ॥

परिजनं रहसि स्थितमन्वशा-
　त्पितृपतिः [4]पितृवत्सलवत्सलम् ।
कुरुत यत्स्वपतेर्हितमादरा-
　दितरदुज्झत कृत्यपरायणाः । १२५ ॥

पशुपतिर्मधुजित्कुलदेवते
　नमत मामिव ते प्रतिवासरम् ।
तदुभयाश्रितमुक्तिपुरादिकं
　त्यजत सज्जनसेवितमद्भुतम् ॥ १२६ ॥

हरिहराङ्घ्रिसरोजनिषेविण-
　स्त्यजत मानवियोगगतान्परम् ।
मम निदेशमनन्यगतात्मनः
　परिजनाः परिपश्यत सादरम् ॥ १२७ ॥

शिवशिवेति वदंस्त्यजतीह य-
　स्तनुमिमां बहुपुण्यसमाश्रयाम् ।
विपिनगस्त्वथ वा गृहसंश्रय
　स्त्यजत दूरत एव गतैनसम् ॥ १२८ ॥

---

[1] क. गतिः । [2] का. स्थितिनयः ।

[3] अ. समीक्षितं । [4] अ. वत्सलः ।

पुरहरेति हरेति हरेति वा
वदति यो मृतिकाल उपागते ।
अपगताघमनुत्तमभागिनं
त्यजत तं पुरुषं मम शासनात् ॥ १२९ ॥

हरिरिति स्फुटवर्णयुगं तनो-
रवसितौ गदतीह तवासनम् ।
प्रभुमिम हरिलोकसमाश्रये
त्यजत मुक्तिपदं हृतसंशयाः ॥ १३० ॥

श्रुतिशिरश्श्रवणादिनिषेविणं
विविदिषुं परमार्थपदं गुरोः ।
सुपरिपक्वमतिं विजितेन्द्रियं
त्यजत मे यदि शासन आदराः ॥ १३१ ॥

शिवचरणसरोजसक्तचेताः
परिदृढभक्तिरनन्यगोचरो यः ।
परिवदति हरिं तदीयभक्तं
नयत भटा मम लोकमेव सद्यः ॥ १३२ ॥

हरिचरणसरोजपक्षपाती
परिदृढभक्तिरनन्यगोचरो यः ।
परिवदति हरं तदीयभक्तं
नयत भटा मम संनिधिं नरं तम् ॥ १३३ ॥

त्यजति निजवधूं परस्य दारान्
परिभजते मदनालसो नरो यः ।
विहितसरणिविमुक्तचित्तमेनं
तदितरमार्गगतं नयन्तु भृत्याः ॥ १३४ ॥

[1]जलनिकट उपागतं तृषार्तं
पशुगणमुग्रमना निवारयेद्यः ।
परिदलितशरीरसन्धिमेनं
नयत पुरं पथि ताडयन्त एव ॥ १३५ ॥

पितृसुतगुरुशिष्यहार्दभेदी
पिशुनकभावमुपेत्य यो दुरात्मा ।
तमपि मम कथञ्चिदुग्रचित्तं
नयत पुरं वितुदन्त एव जिह्वाम् ॥ १३६ ॥

सुरपितृमनुजान्न तर्पयेद्य-
स्सरसमलं स्वयमत्ति भोजनं ना ।
स च निरुदकवर्त्मनैव नेयो
निरयपदं [2]तृषितः क्षुधार्त एव ॥ १३७ ॥

प्रभुरपि न बिभर्ति बन्धुवर्गं
स्वयमतुलां मुदमेति भोगजालैः ।
स तु निरयपदं प्रवेशनीयः
कुमतिरसौ मम दर्शने न तिष्ठेत् ॥ १३८ ॥

निखातां स्वक्षेत्रे कुमतिरपहर्तुं दृढशिलां
परक्षेत्रे लोभाद्दृढमुदखनन्ये कपटिनः ।
नरास्ते दण्ड्या वो विदलितमदास्साधुनिरयं
समानेया घोरं बहुलतमसं दुःखदशिलाम् ॥ १३९ ॥

यस्संसृतिं [3]परिजिहासुर[4]बारुरोह
तुर्याश्रमं पुनरमुञ्चत मुक्तिमार्गम् ।
यो वा बहिर्मुखतया न करोति शास्त्र
चिन्तामुभौ मम पुरातिथिभावयोग्यौ ॥ १४० ॥

---

[1] अ. निकटं ।
[2] अ. क्षुधितस्तृषार्त एव ।
[3] का. परिजिघांसु ।
[4] अ. रुपारुरोह ।

योऽ वा प्रतिश्रुत्य पुनर्न दत्ते
दत्तं पुनर्वा हरते स्म योऽपि ।
तावप्युभौ दुर्विधतां प्रयातः
प्रेत्याशु पात्यौ निरयं महान्तम् ॥ १४१ ॥

द्विजस्य हत्या गुरुतल्पसेवा
पानं सुरायाः कनकस्य चौर्यम् ।
तत्कर्तृसङ्गश्च महान्ति शास्त्रे
पञ्चातिपापानि निनिष्कृतीनि ॥ १४२ ॥

कृतोपकारं न हि वेत्ति यश्च
विश्वासिनं घातयतीह यो वा ।
न [1]निष्कृतिश्चोदितमस्ति शास्त्रे
तयोस्तु तद्दुर्गतिरेव साक्षात् ॥ १४३

इत्थं भृत्यानन्वशाद्धर्मराज-
स्तच्च स्वेभ्यो भिक्षुराजश्शशंस ।
तन्माहात्म्ये वर्णिते क्षेत्रवर्ये
भक्तिः श्रद्धा जायते मानुषाणाम् ॥ १४४ ॥

प्रत्यादेशि च यत्र देहकरणप्राणात्मनामात्मता
लक्ष्यार्थैक्यमुदीरितं शिवगुरुः प्राशंसि शिष्यार्थयोः ।
संवादो विजयेऽत्र शङ्करपदे सर्गो गतस्सप्तमो
यत्राभाणि च काश्चिका समहिमा श्रीकालहस्तीश्वरः
॥ १४५ ॥

। इति श्रीशङ्करविजये व्यासाचलीये
सप्तमस्सर्गः ।

[1] अ. निष्कृतेः ।

## ॥ अथ अष्टमस्सर्गः ॥

एकाम्रनाथं जगदेकनाथं ददर्श भाग्यातिशयेन गम्यम् ।
देवीश्च धामान्तरगां शिवस्य जिज्ञासमानामिव तस्य हार्दम्
॥ १ ॥

ततोऽल्पदूरे निवसन्तमच्युतं पुराणमैक्षिष्ट मनोहराकृतिम् ।
अल्लालनाथं कमलालयापतिं तुतोष दृष्ट्वा करुणार्द्रमानसम्
॥ २ ॥

पुण्डरीकपुरमाययौ मुनिर्यत्र नृत्यति सदाशिवोऽनिशम् ।
वीक्षते प्रकृतिरादिमाश्रिता पार्वतीपरिणतिश्शुचिस्मिता ॥३॥

ताण्डवं मुनिजनोऽत्र वीक्षते दिव्यचक्षुरमलाशयोऽनिशम् ।
जन्ममृत्युभयभेदिदर्शनान्नेत्रमानसाविमोदकारकम् ॥ ४ ॥

किञ्चात्र तीर्थमिति भिक्षुगणेन कश्चि-
त्पृष्टोऽब्रवीच्छिवपदाम्बुजसक्तचेताः ।
संप्रार्थितः करुणयाऽस्मरदत्र गङ्गां
देवोऽथ संन्यधित दिव्यसरित्सुतीर्थम् ॥ ५ ॥

शिवाज्ञया भूदिति तीर्थमेतत्
शिवस्य गङ्गेति वदन्ति लोके ।
स्नानादमुष्यां विधुतोरुपापाः
शनैश्शनैस्ताण्डवमीक्षमाणाः ॥ ६ ॥

शिवस्य नाट्यश्रमकर्शितस्य
श्रमापनोदाय विचिन्तयन्ती ।
[1] शिवैव गङ्गा परिणामगाभू-
त्ततोऽथवैतत्प्रथितं तदाख्यम् ॥ ७ ॥

---

[1] अ - शिवेति ।

भ्राम्यत्तीरहतस्खलज्जलगतेः पर्यापतद्विन्दुकात्
पार्श्वेनावसते विनोदवशतो यज्जह्नुकन्यापयः ।
नृत्यं तन्वति धूर्जटौ विगलितं प्रेङ्खज्जटामण्डला-
त्तेनैतच्छिवजाह्नवीति कथयन्त्यन्ये विपश्चिज्जनाः ॥८॥

स्नायं स्नायं तीर्थवर्येऽत्र नित्यं
वीक्षं वीक्षं देवपादाब्जयुग्मम् ।
शोधं शोधं मानसं मानवोऽसौ
वीक्षेतेदं ताण्डवं शुद्धचेताः ॥ ९ ॥

परिवर्णयितुं क्षमेत पुण्यं
पुरवैरी स्वयमेव तस्य शुद्धम् ।
विनिमज्य शिवे शिवादिगङ्गा
जलराशौ समुदीक्षते शिवं यः ॥ १० ॥

प्रणिपतन् शिवपादसरोरुहे
परिपतन् शिवतीर्थजले सदा ।
अधिगतिं विरहय्य परात्मगां
भवमहार्णवपारमुपैति सः ॥ ११ ॥

[1]पञ्चाक्षरं जपति लक्ष्मनन्यभाव-
स्तीर्थाप्लुतश्शिवमनुग्रमुदीक्षमाणः ।
निर्धूय पापमखिलं परिशुद्धचित्तो
मर्त्यः प्रयाति शिवभूयमनन्यमृग्यम् ॥ १२ ॥

ना हीनजन्मा [2]प्रविमूढचेताः
कृतोरुपापोऽपि यतःकुतश्चित् ।
पुरं पुरारेरिदमप्यमर्त्य
स्त्यजेच्छरीरं यदि मुक्तिभाक् स्यात् ॥ १३ ॥

---

[1] अ. पञ्चाक्षरी । [2] अ. परिभूत ।

विष्ण्वादयस्सुरगणा अभिगम्य तीर्थे
स्नात्वाभिवीक्ष्य शिवमादरतोऽर्चयित्वा ।
संप्रार्थ्य भक्तिमचलां शिवपादपद्मे
स्वं धाम यन्ति सततं किमु मर्त्यमुख्याः ॥ १४ ॥

शतयोजनदूरगोऽपि य-
श्शिवगङ्गेति वदन्निमज्जति ।
स तु दूरगदुष्कृतो भवेत्
किमु [1]पश्यन्नुभयं पुरःस्थितम् ॥ १५ ॥

यन्निरूपणविधावुपर्यधो-
ऽगच्छतां हरिविधी सनातनौ ।
यच्च नोदयति नास्तमेति वा
ज्योतिरुत्सरति तादृशं त्विह ॥ १६ ॥

अनुदितास्तमितमेकमुज्ज्वलं
ज्योतिरुत्थितमितो महाव्रतम् ।
[2]परिहसन्ति [3]वदत्यपमानगा-
स्ते विशन्ति शिवतत्त्वसंस्थितिम् ॥ १७ ॥

प्रावृट्तोयदसंनिभश्शशभृतं बालं दधन्मस्तके
दिक्षु व्यापृतदीर्घबाहुवलयस्सर्वाङ्ग[4]भूषाचितः ।
पूर्णानन्दघनो विदूरगमलो नृत्यन्सहासो युवा
व्याघ्रत्वक्परिधानवान्विजयते क्षेत्रे भवानीपतिः ॥ १८ ॥

इतीरितश्शङ्करयोजितात्मा
केनापि भिक्षुर्मुदितो जगाहे ।
तीर्थे तदाप्लुत्य ननाम शम्भो-
रङ्घ्री जितात्मा भुवनस्य गोप्तुः ॥ १९ ॥

---

[1] का. त्वभयं पुरस्थितं ।
[2] का. परिहरन्ति ।
[3] अ. ददत्यपि मानवा ।
[4] अ. भूषार्चितः; का. भूषोज्ज्वल ।

रामसेतुगमनाय सन्दधे मानसं मुनिरनुत्तमः पुनः ।
वर्त्मनि प्रयतमानसो व्रजन् सन्ददर्श सरितं कवेरजाम् ॥ २० ॥

क्षेत्राणि या पाययते पयांसि
मातेव बालान् तृषितान् क्षुधार्तान् ।
तरङ्गहस्ता पुलिनाधिरोहा
समीननेत्राम्बुरुहस्तनाढ्या ॥ २१ ॥

योन्नताप्यवनता दिवानिशं
सस्यबालपरिपोषणोत्सुका ।
हंसपत्रधवलांशुकोज्वला
मोदते स्वपतिगामिनी सती ॥ २२ ॥

प्रायेण नद्यः परिषेव्यमाणाः
युञ्जन्ति पुण्येन निषेवमाणम् ।
नाकं जनायात्मनिषेवकाय
ददत्यनन्तं भुवि तास्तदन्ते ॥ २३ ॥

अम्भस्तदीयं परिषेवमाणा
विशुद्धेन्द्रिया विष्णुपदारविन्दे ।
अनन्यलभ्यां सुदृढां लभन्ते
भक्तिं यतो [1]मुक्तिरनन्यलभ्या ॥ २४ ॥

कवेरकन्याजलनिर्मलत्वं
किं वर्ण्यते तस्य निसर्गसिद्धेः ।
अगस्त्यकुण्डीजलमेतदीयं
जलं पुराणानि वदन्ति सन्तः ॥ २५ ॥

---

[1] क. यत्नलभ्या ।

वस्तुं यदीयं पुलिनं मुरारये
सिन्ध्वन्तरीपे वसते हिरण्मये ।
अरोचतारोचितसर्वदिङ्मुखे
श्रीपद्मनाभाय हिरण्यवाससे ॥ २६ ॥

शय्या तदीया भगवाननन्त-
स्सहस्रमूर्धा सुकुमारभोगः ।
यदीयपादाम्बुजयुग्ममर्थ्यं [1]
मृद्नाति पद्मा करपल्लवाभ्याम् ॥ २७ ॥

यत्केशपाशविनिवेशितपुष्पमाला-
सौरभ्यलुब्धमधुपायिगणस्समन्तात् ।
भ्राम्यन् व्यराजत विरोदितुमागतो वः
वेदः स्वयं प्रथितशब्दमयो हि मूर्तः ॥ २८ ॥

[2]किरीटमस्योपरि दुर्विभाव्यं
यदीयमुच्चैर्मुनिवृन्ददृश्यम् ।
[3] संशोधते नूनमितोऽपि [4] जातं
तेजस्त्रयं लोकहितैकवृत्तम् ॥ २९ ॥

यदीयनेत्राम्बुरुहे विशाले
लोकैकदीपाविह पुष्पवन्तौ ।
पद्मापि नित्यं स्पृहयालुरास्ते
यत्पादपद्माय सकृत्सकृद्वा ॥ ३० ॥

यदाननस्योपमितिर्न पङ्कजं
न बालचन्द्रो न च पूर्णचन्द्रमाः ।
पङ्कोद्भवावृत्तकलङ्कदूषणैः
स्वमेव सा स्वस्य मता महाद्युतेः ॥ ३१ ॥

[1] अ मर्थ्यं । [2] अ· मध्योपरि ।
[3] अ· संदृश्यते ; का· संशोभते । [4] अ· अभिजातं ।

भुजा यदीया भुवनैकरक्षा-
दीक्षा समग्राधिकृशक्तिभाजः ।
धृताब्जशङ्खारिमहायुधाश्च[1]
क्षेत्रं यतो जातमिदं प्रसिद्धम् ॥ ३२ ॥

ऊरू यदीयौ क्रमवृत्तशोभौ
तृतीयवर्णोदयजन्मभूमी ।
सौन्दर्यसर्वस्वनिधानपात्रे
यतः पराजीयत हस्तिहस्तः ॥ ३३ ॥

यत्पादौ जितकच्छपौ मृदुतलौ ध्येयौ मुनीनां गणैः
ब्रह्मेन्द्रादिसुरार्चितौ नखमणिप्रद्योतिताशामुखौ ।
नानारत्नमयोरुपीठनिहितौ क्लेशानभिज्ञौ सदा
गङ्गायाः पितृवंशतामुपगतौ याभ्यां तुरीयोदयः ॥ ३४ ॥

कवेरकन्यासलिलाभिषिक्तः
श्रीपद्मनाभस्य पदारविन्दे ।
आनर्च नम्रो विनयी विनेयै-
स्ततः प्रतस्थेऽभिमतस्थलाय ॥ ३५ ॥

गच्छन् गच्छन्मार्गमध्याभियातं
गेहं भिक्षुर्मातुलस्याजगाम ।
दृष्ट्वा शिष्यैस्तं चिरेणाभियातं
मोदं प्रापन्मातुलश्शास्त्रवेदी ॥ ३६ ॥

शुश्राव तं बन्धुजनस्सशिष्यं
स्वमातुलागारमुपेयिवांसम् ।
आगत्य दृष्ट्वा चिरमागतं तं
जहर्ष हर्षातिशयेन साश्रुः ॥ ३७ ॥

---

[1] क. महागदाश्च ।

रुरोद कश्चिन्मुमुदेऽत्र कश्चित्
जहास पूर्वाचरितं बभाषे ।
कश्चित्प्रमोदातिशयान्न किञ्चि-
दूचे स्खलद्गीः प्रणनाम कश्चित् ॥ ३८ ॥

ऊचेऽथ तं ज्ञातिजनः प्रमोदी
दृष्टा चिरायाक्षिपदं गतोऽभूः ।
दिदृक्षते त्वां जनतातिहार्दा-
त्तथापि शक्नोति न वीक्षणाय ॥ ३९ ॥

पुत्रास्सुमित्रा न च बन्धुवर्गः
न राजबाधा न च चोरभीतिः ।
दुःखास्पदा नात्र विचारहीनं
कृतार्थतामूलपदं यातित्वम् ॥ ४० ॥

प्रसूनवन्तं फलिनं महान्तं
शाखोपशाखाचितमेव वृक्षम् ।
बाधन्त आगत्य न तद्विहीनं
यथा तथा वा [1] धनिनं नृपाद्याः ॥ ४१ ॥

[2] कुमाररक्षागतमानसाना-
मायाति निद्रापि सुखं न जातु ।
क्व देवतार्चा क्व च तीर्थयात्रा
क्व वा निषेवा महतां भवेन्नः ॥ ४२ ॥

अश्रौष्म संन्यासकृतं भवन्तं
विप्रात्कुतश्चिद्गृहमागतान्नः ।
कालोऽत्यगात्ते बहुरद्य दैवा-
त्तीर्थस्य हेतोर्गृहमागतस्त्वम् ॥ ४३ ॥

---

[1] का॰ धनिनो ।   [2] का॰ कुटुम्ब ।

यथा शकुन्ताः परिवर्धितान् द्रुमान्
समाश्रयन्ते सुखदान्जहत्यपि ।
[1]परप्रक्लृप्तान्मठदेवतागृहान्
यतिस्समाश्रित्य तथोज्झति ध्रुवम् ॥ ४४ ॥

यथा हि पुष्पाण्य[2]धिगम्य षट्पद-
स्सङ्गृह्य सारं रसमेव भुङ्क्ते ।
तथा यतिस्सारमवाप्नुवन् [3]सुखी
गृहाद्गृहादोदनमेव भिक्षते ॥ ४५ ॥

यतिर्विरज्यात्मगतिः कलत्रं
देहं [4]गृहं [5]संगतमेव [6]मुख्यम् ।
विरक्तिभाजस्तनयाः स्वशिष्याः
किमर्थनीयं [7]यतिनो महात्मन् ॥ ४६ ॥

मनोरथानां न समाप्तिरिष्यते
पुनः पुनस्सन्तनुते मनोरथान्[8] ।
दारानभीप्सुर्यतते दिवानिशं
तान्प्राप्य तेभ्यस्तनयानभीप्सति ॥ ४७ ॥

अनाप्नुवन् दुःखमसौ सुतीव्रं
प्राप्नोति चेष्टेन वियुज्यमानः ।
सर्वात्मना कामवशस्य दुःखं
तस्माद्विरक्तिः पुरुषेण कार्या ॥ ४८ ॥

---

[1] अ. प्रयुक्तान् ।
[2] अ. अभिगम्य ।
[3] क. सुखं ।
[4] का. गतं ।
[5] अ. संयतमेव ।
[6] का भिक्षते ।
[7] अ. यतिना ।

विरक्तिमूलं मनसो विशुद्धिं
तन्मूलमाहुर्महतां निषेवाम् ।
भवादृशस्तेन च दूरदेशे
परोपकाराय रसामटन्तः ॥ ४९ ॥

अज्ञातगोत्रा विदितात्मतत्त्वा
लोकस्य दृष्ट्या जडवद्विभान्तः ।
चरन्ति भूतान्यनुकम्पमाना-
स्सन्तो यदृच्छोपगतोपभोग्याः[1] ॥ ५० ॥

चरन्ति तीर्थान्यपि सङ्ग्रहीतुं
लोकं महान्तो ननु शुद्धभावाः ।
शुद्धात्मविद्याक्षपितोरुपापाः
तज्जुष्टमम्भो निगदन्ति तीर्थम् ॥ ५१ ॥

वस्तव्यमत्र कतिचिद्दिवसानि विद्वन्
त्वद्दर्शनं वितनुते [2]मुदमाधिहन्त्रीम् ।
एष्यद्वियोगचकिता जनतेयमास्ते
दुःखं गतेऽत्र [3]भवितेति भवत्यसङ्गे ॥ ५२ ॥

संयुनक्ति वियुनक्ति देहिनौ
दैवमेव परमं मनागपि ।
इष्टसङ्गतिनिवृत्तिकालयो-
र्निर्विकारहृदयो भवेन्नरः ॥ ५३ ॥

मध्याह्नकाले क्षुधितस्तृषार्तः
क मेऽन्नदातेति वदन्नुपैति ।
यस्तस्य निर्वापयिता क्षुधार्तेः
कस्तस्य पुण्यं वदितुं क्षमेत ॥ ५४ ॥

---

[1] क. भोग्याः । [2] अ. हन्तृ ।
[3] अ. अत्रभवतीति ।

सायंप्रातर्वह्निकार्यं वितन्वन्
मज्जंस्तोये [1]दण्डकृष्णाजिने च ।
धृत्वा वर्णी वेदवाक्यान्यधीयन्
क्षुध्यन् शीघ्रं गेहिनो गेहमेति ॥ ५५ ॥

उच्चैश्शास्त्रं भाषमाणोऽपि भिक्षु-
स्तारं मन्त्रं संजपन् वा यतात्मा ।
मध्येऽजस्रं जाठराग्नौ प्रदीप्ते
दण्डी नित्यं [2]गेहिनो गेहमेति ॥ ५६ ॥

यदन्नदानेन निजं शरीरं
पुष्णंस्तपोऽयं [3]क्रमते सुतीव्रम ।
कर्तुस्तदर्धं ददतोऽन्नमर्ध-
मिति स्मृतिस्संवदतेऽनवद्या ॥ ५७ ॥

पुण्यं गृहस्थेन विचक्षणेन
गृहेषु सश्वेतुमलं प्रयासात् ।
विनापि तत्कर्तृनिषेवणेन
तीर्थादिसेवा बहुदुःखसाध्या ॥ ५८ ॥

गृही धनी धन्यतरो मतो मे
तस्योपजीवन्ति धनं हि सर्वे ।
चौर्येण कश्चित्प्रणयेन कश्चित्
दानेन कश्चिद्बलतोऽपि कश्चित् ॥ ५९ ॥

सन्तोषयेद्वेदविदं द्विजं य-
स्सन्तोषयत्येव स सर्वदेवान् ।
तद्वेदिविप्रे निवसन्ति देवा
इति स साक्षाच्छ्रुतिरेव वक्ति ॥ ६० ॥

---

[1] का. दण्डकृष्णाजिनं च । [2] गेहतो ।
[3] अ. कुरुते ।

स्वधर्मनिष्ठा विदिताखिलार्था
जितेन्द्रियास्सेवितसर्वतीर्थाः ।
परोपकारव्रतिनो महान्त
आयान्ति सर्वे गृहिणो गृहाय ॥ ६१ ॥

गृही गृहस्थोऽपि तदश्नुते फलं
यत्तीर्थसेवाभिरवाप्यते जनैः ।
तत्तस्य तीर्थं गृहमेव कीर्तितं
धनी वदान्यः प्रवसेन्न कश्चन ॥ ६२ ॥

अन्तःस्थितं मूषकमुख्यजीवा
बहिःस्थितं गोमृगपक्षिमुख्याः ।
जीवन्ति जीवास्सकलोपजीव्या-
स्तस्माद्गृही सर्ववरो मतो मे ॥ ६३ ॥

शरीरमूलं पुरुषार्थसाधनं
तच्चान्नमूलं श्रुतितोऽवगम्यते ।
तच्चान्नमस्माकममीषु संस्थितं
सर्वं फलं गेहपतौ[1] समाश्रितम् ॥ ६४ ॥

ब्रवीमि भूयः [2]शृणुतादरेण
गृहाऽऽगतं पूजयताऽऽतुरातिथिम् ।
सम्पूजितो वोऽतिथिरुद्धरेत्कुलं
निराकृतात्किं भवतीति नोच्यते ॥ ६५ ॥

बिनाभिसन्धिं कुरुत श्रुतीरितं
कर्म द्विजा नो जगतामधीश्वरः ।
तुष्येदिति प्रार्थनया गतैनमां
स्वान्तस्य शुद्धिर्भविता चिरेण वः ॥ ६६ ॥

---

[1] का. पतिद्रुमाश्रयम् । [2] अ श्रुतमादरेण ।

संदिश्येत्थं बन्धुतां भिक्षुराजो
भिक्षाश्चक्रे मातुलस्यैव गेहे ।
पप्रच्छैनं मातुलो भुक्तवन्तं
किं स्विच्छन्नं पुस्तकं शिष्यहस्ते ॥ ६७ ॥

टीका विद्वन्भाष्यगेति ब्रुवाण-
स्तां देहीति प्रोचुषेऽदत्त तां च ।
अद्राक्षीत्तां मातुलस्तस्य बुद्धिं
दृष्ट्वाऽनन्दत् खेदमापच्च किंचित् ॥ ६८ ॥

प्रबन्धनिर्माणविचित्रनैपुणीं
दृष्ट्वा प्रमोदं स विवेद किंचित् ।
मतान्तराणां किल युक्तिजालै-
र्निरुत्तरं बन्धनमालुलोचे ॥ ६९ ॥

गुरोर्मतं स्वाभिमतं विशेषात्
निराकृतं तत्र समत्सरोऽभूत् ।
साधुर्निबन्धोऽयमिति ब्रुवाणं
तं साम्यसूयं स कृताभिनन्दनः ॥ ७० ॥

गच्छामि सेतुं त्वयि पुस्तभारं
निक्षिप्य जीवो मम वर्ततेऽत्र ।
यथेतरेषां पशुगोहिरण्ये
प्रेमा तथा नः खलु पुस्तकेषु ॥ ७१ ॥

स पद्मपादो स्व गृहे प्रयास्यन्
शिष्टां निचिक्षेप तमेवमुक्त्वा ।
प्रतिष्ठमानस्य बभूव कष्टं
निमित्तमेष्यत्फलसूचनाय ॥ ७२ ॥

अस्पन्दतास्य नयनं किल वाममीषत्
पुस्फोर बाहुरपि वामगतस्तथोरुः ।
चुक्षाव नास्य पुरतः क्वचिदस्खलीच्च
सर्वं ययौ न गणयन् गुरुरस्मदीयः ॥ ७३ ॥

गतेऽत्र मेने किल मातुलोऽस्य
ग्रन्थे स्थितेऽस्मिन् गुरुपक्षहानिः ।
दग्धेऽत्र जायेत महापवादो
नोक्त्या निराकर्तुमपि प्रभुत्वम् ॥ ७४ ॥

पक्षस्य नाशाद्गृहनाश एव नो
वरं गृहेणैव दहामि पुस्तकम् ।
एवं निरूप्य न्यदधाद्धुताशनं
चुक्रोश चाग्निर्दहतीति मे गृहम् ॥ ७५ ॥

ऐतिह्यमाश्रित्य वदन्ति चैवं
तदेव मूलं मम भाषणेऽपि ।
यावत्कृतं तावदिहास्य कर्तु-
र्वाच्यं ततः स्याद्द्विगुणं प्रवक्तुः ॥ ७६ ॥

गच्छन्नसौ फुल्लमुनेर्जगाम
तमाश्रमं यत्र च रामचन्द्रः ।
अश्वत्थमूले न्यधित स्वचापं
स्वयं कुशानामुपरि न्यषीदत् ॥ ७७ ॥

तीर्त्वा समुद्रं जनकात्मजाया-
स्सन्दर्शनोपायमनीक्षमाणः ।
वसुन्धरायां प्रभवः प्लवङ्गा
न वारिराशौ बहवः क्षमन्ते ॥ ७८ ॥

सञ्चिन्तयन्निति कुशासनसंनिविष्टो
ज्योतिस्तदैक्षत विदूरगमेव किंचित् ।
संव्याप्नुवज्जगदिदं सुखशीतलं यत्
संप्रार्थनीयमनिशं मुनिदेवताभिः ॥ ७० ॥

आगच्छदात्माभिमुखं निरीक्ष्य
सर्वे तदुत्तस्थुरुदारवीर्याः ।
ततः पुमाकारमदृश्यतैत-
न्महाप्रभामण्डलमध्यवर्ति ॥ ८० ॥

मध्ये प्रभामण्डलमैक्षताञ्चितं
शिवाकृतिं सर्वतपोमयं पुनः ।
लोपादिमुद्रासहितं महामुनिं
प्राबोधि कुम्भोद्भवमादराज्जनः ॥ ८१ ॥

अगस्त्यमृग्यो[1] रघुनन्दनस्तत-
स्स्वखेदमन्तःकरणोत्थमत्यजत् ।
प्रायो महद्दर्शनमेव देहिनां
क्षिणोति खेदं रविवन्महत्तमः ॥ ८२ ॥

सभार्यमर्घ्यादिभिरर्चयित्वा
रामस्तदाङ्घ्रिं शिरसा ननाम ।
तूष्णीं मुहूर्तं व्यसनार्णवस्थो
धृतिं समास्थाय पुनर्बभाषे ॥ ८३ ॥

दृष्ट्वा भवन्तं पितृवत्प्रमोदे
यन्मां भवान् दुःखमहार्णवस्थम् ।
स्वयं समागात्कृपयेह तस्मा-
न्मन्ये ममात्मानमवाप्तकामम् ॥ ८४ ॥

[1] अ. दृश्यो ।

वंशो महान्मे तपनात्प्रवृत्तो
न तत्र मादृग्जनिता न जातः ।
पदच्युतोऽहं प्रथमं सभार्य-
स्सलक्ष्मणोऽरण्यमुपागतश्च ॥ ८५ ॥

तत्रापि भार्यामहरच्छलेन
स रावणो राक्षसपुङ्गवो मे ।
सा चाधुनाशोकवने समास्ते
कृशा वियोगात्स्वत एव तन्वी ॥ ८६ ॥

तीर्त्वा समुद्रं विनिहत्य दुष्टं
बलेन सीतामहमाहरामि ।
यथा तथोपायमुदाहर त्वं
न मे त्वदन्योऽस्ति हितोपदेष्टा ॥ ८७ ॥

इतीरितो राममुवाच विद्वन्
मा राम शोकस्य वशं गतोऽभूः ।
वंशद्वये सन्ति नृपा महान्तः
संप्राप्य दुःखं परिमुक्तदुःखाः ॥ ८८ ॥

त्वमग्रणीर्दाशरथे धनुर्भृतां
तवानुजस्यापि समो न लक्ष्यते ।
प्लवङ्गमानामधिपस्य कोटिशः
सन्तीह मां मुञ्च इति ब्रुवन्तः ॥ ८९ ॥

सहायसम्पत्तिरियं तवास्ति
हितोपदेष्टाप्यहमस्मि कश्चित् ।
वारांनिधिः किं कुरुते तवायं
स्मराधुना गोष्पदमात्रमेनम् ॥ ९० ॥

पुरेव पार्वोब्धिमहं पिबामि
[1]शुष्कीकृतेन प्रतियाहि लङ्काम् ।
एवं मया कीर्तिरुपार्जिता स्यात्
बद्धे तु वार्धौ तव [2]सोर्जिता स्यात् ॥ ९१ ॥

सेतुं वार्धौ बन्धयित्वा जहि त्वं
दुष्टं चौर्याद्येन सीता हृतासीत् ।
प्राप्नोषि त्वं कीर्तिमाचन्द्रतारं
तेनात्राब्धि बन्धय त्वं कपीन्द्रैः ॥ ९२ ॥

इत्थं यत्र प्रेरितोऽगस्त्यवाचा
सेतुं रामो बन्धयामास वार्धौ ।
तुङ्गैः शृङ्गैर्वानरैस्तेन गत्वा
तं हत्वाऽऽजौ जानकीमानिनाय ॥ ९३ ॥

तत्रोषित्वा घस्रमेकं मुनीन्द्रः
पुण्यं पश्यन् सेतुविस्तारमग्र्यम् ।
गन्धाहार्थं पुण्यतीर्थं जगाम
यत्रोमेशस्संनिधत्ते भवान्या ॥ ९४ ॥

स्नात्वा स्नात्वा तीर्थवर्येषु भिक्षुः
पावंपावं रामनाथं ददर्श ।
स्तावंस्तावं पूजयामास भक्त्या
तं चाप्राक्षीच्छिष्यसङ्घो मुनीन्द्रम् ॥ ९५ ॥

ब्रूह्यस्मभ्यं देवदेवस्य विद्वन्
कस्मादासीद्रामनामाभिधानम् ।
सर्वज्ञानामग्रणीस्त्वं हि किञ्चि-
त्ते नाबुद्धं विद्यते विष्टपेषु ॥ ९६ ॥

---

[1] अ. शुष्केऽत्र तेन ।    [2] अ साजिता स्यात् ।

पृष्टो मुनीन्द्रोऽचकथत्कथां तां
हत्वा दशास्यं परिगृह्य सीताम् ।
विधाय लङ्काधिपतिं कनिष्ठं
रामो मुनीन्द्रैः पुरमाजगाम ॥ ९७ ॥

आयन्नसौ सेतुपथेन कोट्या
चिच्छेद सेतुं तिसृषु स्थलीषु ।
चापस्य लोके विदधत् स्वकीर्तिं
वाग्मी ह्यगस्त्यं वचनं बभाषे ॥ ९८ ॥

श्रीगन्धमादनगिरौ भगवन्प्रतिष्ठां
लिङ्गस्य कर्तुमनसो भव मे सहायः ।
स्थानं मुहूर्तदिवसौ तदपेक्षितश्च
ब्रूहि त्वमद्य जननीं विशदां शिलाश्च ॥ ९९ ॥

पृष्टो मुनिः प्रतिवचस्समदत्त राज्ञे
त्वं राम मारुतिमुदाहर तच्छिलायै ।
लोकेषु नर्मदशिला प्रथिता प्रशस्ता
तां शीघ्रमागमय सन्निहितो मुहूर्तः ॥ १०० ॥

श्रुत्वा स मारुतिमथो निजगाद राम-
स्त्वं नर्मदातटमुपेत्य विशिष्टलिङ्गम् ।
तस्मादिहाऽऽनय सुखं कलशोद्भवो मां
सम्यङ्मुहूर्तमनुशास्ति समीपगं तत् ॥ १०१ ॥

तस्यानुशासनमथाऽऽदरतो गृहीत्वा
सङ्कोच्य गात्रमनघो नभ उत्पपात ।
गच्छन्नसावभिमतस्थलतोऽन्य[1] देशं
वेगादवातरदनल्पतनुर्महात्मा ॥ १०२ ॥

---

[1] अ देशे ।

तत्कक्षवाय्वभिहतास्तरवो निपेतु-
[1]स्संत्रासिताः स्म निपतन्ति महीरुहोऽन्ये ।
तोयोज्झितं तलमदृश्यत निम्नगानां
वेगेन तस्य महता पृथुपङ्कशेषम् ॥ १०३ ॥

विज्ञाय देशमतिलङ्घितमुत्पतिष्णुः
श्रीनर्मदातटमसौ पुनराससाद ।
लिङ्गं ततो मृगयितुं सलिलं जगाहे
नापश्यदुत्तममनुत्तमवायुसूनुः ॥ १०४ ॥

चिरायमाणे मरुतस्तनूजे
मुहूर्तकाले परिवर्तमाने ।
अगस्त्यमाचष्ट रघूत्तमोऽसौ
किमत्र कार्यं भगवन्[2] ब्रवीतु ॥ १०५ ॥

प्रतीक्ष्यमाणे तनये नभस्वतो
मुहूर्तकालस्त्वतियाति दुर्लभः ।
लिङ्गान्तरञ्चेह न दृष्टिगोचरं
संप्राप्तमस्मान्व्यसनं सुदुस्तरम् ॥ १०६ ॥

अथाब्रवीत्संकटमुद्दिधीर्षुः
पुरातनं लिङ्गमिहास्ति [3]पुण्यम् ।
प्रपूजयैनं महिते मुहूर्ते
त्वन्नाथनाम्ना भविता पृथिव्याम् ॥ १०७ ॥

इदमेव युगान्तरेऽर्चितं
भवता लिङ्गमनुत्तमं शिवम् ।
पञ्चाक्षरप्रोक्तविधानमाश्रयं
ननाम तुष्टाव च तत्पदाम्बुजम् ॥ १०८ ॥

---

[1] अ. संताडिताः स्म । [2] अ. भगवान् ।
[3] अ. पूज्यं ।

अथाविरासीद्धनुमान् सलिङ्ग-
श्चुकोप लिङ्गान्तरपूजनेन ।
आनायि लिङ्गं महतः प्रयत्ना-
द्विदूरदेशात्तदुपेक्षितं हा ॥ १०९ ॥

रुषितं हनुमन्तमूचिवान् रघुनाथः कृपयार्द्रमानसः ।
किमु रुष्यसि वत्स कारणं हनुमंल्लिङ्गमपूजि पूजितम्
॥ ११० ॥

अगस्त्यवाचा परिपूजितं मया
मुहूर्तकालाय भवत्यनागते ।
बिभेमि किञ्चिद्व्यसनोपसर्पका-
द्भवान् सदा मे व्यसनापसर्पकः ॥ १११ ॥

यदत्र कार्यं भवता तदीयं
वदात्र कार्यं तदहं विधास्ये ।
नेक्षेऽस्य कोपस्य महन्निदानं
प्रधानकार्येऽविदिते हि कोपः ॥ ११२ ॥

मदागमात्पूर्वमपूजि यत्त्वया
लिङ्गं तदुद्धृत्य मदीयलिङ्गके ।
संस्थापिते शाम्यति मामकं मनो
नो चेच्छ्रमो मे भविता निरर्थकः ॥ ११३ ॥

मया [1] हनूमन्कृतलिङ्गचालनं कर्तुं न शक्यं मनसापि जीवता ।
त्वयैव कार्यं स्थितलिङ्गचालनं संस्थापनं तावकलिङ्गगोचरम्
॥ ११४ ॥

उच्चकर्ष किल पुच्छवेष्टितं लिङ्गमद्भुतबलोऽथ वानरः ।
उद्धरन् बहुविधेन कर्मणा संततामवसुधा चचाल च ॥ ११५ ॥

क्षोभमीयुरथ वारिराशयः पेतुरुच्छ्रितनगाश्चकम्पिरे ।
पर्वतास्सवननिम्नगाः परं नाचलद्विपुललिङ्ग [2] मण्वपि ॥ ११६ ॥

---

[1] अ. स्थित ।   [2] को. मण्टपम् ।

तत्याज निद्रां किल पद्मनाभः
क्षीरोदशायी मुनयस्समाधिम् ।
गर्भा निपेतुर्लघु गर्भिणीनां
ब्रह्माण्डमेतच्चकितं तदानीम् ॥ ११७ ॥

यस्येक्षणेनैव जगत्समस्तं
कल्पावसाने लयमेत्यवश्यम् ।
तदुद्दिधीर्षुर्यतते दुराशो
विवेकदूरः खलु कोविदोऽपि ॥ ११८ ॥

निबध्य पुच्छं शिवलिङ्गमध्ये
बभ्राम संभ्रान्तमना हनूमान् ।
लिङ्गे विकारप्रतिपादनाय
न च क्षमोऽभूद्बहिरापपात ॥ ११९ ॥

पतन् हनूमान् किल मङ्गलायाः
क्षेत्रे पपातागतचित्तमोहः ।
आत्मानमन्यं न विवेद किञ्चि-
द्ववाम चोष्णं रुधिरं [1] गतात्मा ॥ १२० ॥

श्रीमङ्गलायाः करुणाकटाक्ष-
पातेन सञ्जीवितवानमंस्त ।
निद्रा किमेषा मतिविभ्रमो वा
कुतो न्यपप्तं च वसुन्धरा का ॥ १२१ ॥

यत्रापतच्चोदवमीच्च शोणितं
तत्तीर्थमद्यापि तथैव दृश्यते ।
हनूमतः कुण्डमुदाहरन्ति त-
द्धनूमतो यत्तदभूत्पुरातनम् ॥ १२२ ॥

---

[1] अ. महात्मा ।

स चाम्बिकायाः प्रणिपत्य पादयो-
श्शनैश्शनै रामसमीपमाययौ ।
स तेन सार्धं शरणं ययौ शिवं
महापराधाच्चकितोऽनुतापवान् ॥ १२३ ॥

[1] महापराधो विहितस्सुदुस्सह-
स्तथापि तं क्षन्तुमिहार्हसि प्रभो ।
कृतागसं किं पितरौ प्रमुञ्चतः
शिशुं सहित्वा पुनरेव रक्षतः ॥ १२४ ॥

धरा क्षमा सारवती प्रसिद्धा
बिभर्ति भूतानि दिवानिशं या ।
आदाय यद्गन्धगुणान् [2] समर्चा
तन्मूर्तिभाजे भवते नमोऽस्तु ॥ १२५ ॥

यज्जीवनं जीवनमेव देहिनां
प्राणाङ्गना बिभ्रति यत्समाश्रयात् ।
यद्रूपमेवोपविधिर्विधीयते
तत्तावकीं मूर्तिमुशन्ति सज्जनाः ॥ १२६ ॥

यत्र जुह्वति घृताप्लुतं हविर्यो मुखं मखभुजां निगद्यते ।
यो निहन्ति बहिरान्तरं तमः सत्तमं तमपि तावकं वपुः
॥ १२७ ॥

यस्माद्दते निखिलमेव भवत्यचेष्टं
यत्सङ्गतेर्भवति पावनताखिलस्य ।
दग्धृत्वमस्य यदुपाश्रयतोऽनलस्य
तत्तावकं वपुरहं प्रणतोऽस्मि देव ॥ १२८ ॥

---

[1] अ. मया ।
[2] अ. समर्च्या ।

विश्वस्य शब्द[1] निचयस्य यदाश्रयत्वं
यन्मूलतोऽस्य जगतोऽप्यवकाशलाभः ।
या केनचित्प्रतिहतिं न हि याति किंचि-
त्सा नाभसी तव तनुर्मम मोदिकाऽस्तु ॥ १२९ ॥

या सर्वभूतनिवहार[2] सुगतिं गृहीत्वा-
प्यस्तं गता [3]पुनरुपैति पुनर्दधाना ।
वृष्ट्यादिना च परिपालयति प्रयत्नात्
सा सूरमूर्तिरवताद्व्यसनार्णवान्नः ॥ १३० ॥

या चौषधीरभिनिविश्य करोति वृद्धिं
यच्चन्द्रिका कुमुदबान्धवतामुपेता ।
अंशेन या व्रजति भूषणतां सदा ते
सा वैधवी तव [4]तनुर्मम चान्तिकेऽस्तु ॥ १३१ ॥

या वेदभाषितपदं परिनिर्वहन्ती
सत्संप्रदायमभिवर्तयतीह लोके ।
या जङ्गमाग्रसरतामभियाति वन्द्या
सा दीक्षिता तव तनुः [5]क्षपयेत मोहम् ॥ १३२ ॥

अष्टाविमास्सकललोकहिताय पूर्वं
कृप्तास्तवैव तनवो भगवन्परं किम् ।
भोक्ता त्वमेव विधुमस्तक भोग्यजातं
तत्साधनश्च सकलं तव रूपमेव ॥ १३३ ॥

यद्दुग्धमात्रपतनान्म्रियतेऽमृताशी
तत्कालकूटमपिबश्शिव लोकहेतोः ।
कालात्मना परिणतं तदपीह कण्ठे
भूषायते त्वमसि तद्धर नीलकण्ठः ॥ १३४ ॥

---

[1] अ. निवहस्य । [2] अ. सुगुणान् ।
[3] अ. उदेति । [4] का. तनुस्तनुतात्सुखं नः ।
[5] का. क्षपयेन्महांहः ।

पूर्वं तथा त्रिपुरवासिजनेन बाधा
लोकत्रये कतिचिदेव दयापरीता ।
एकेषुणा त्रिभुवनं परिपालयेथा
दग्ध्वा पुरं किमु वदामि पराक्रमं ते ॥ १३५

ॐ कर्णिकासनजुषे मुदिताय नित्यं
स्वात्मप्रभाय सकलाधिपरिच्युताय ।
ईशानमूर्तिवपुषे भवते नमोऽस्तु
स्वच्छन्दचाररसिकाय नमश्शिवाय ॥ १३६

त्वामुच्चिरवांसुरहमस्मि न मादृशोऽन्यो
विद्येत मूढधिषणास्त्रिषु विष्टपेषु ।
त्वत्पादपङ्कजरजःकणभूषितानां
तत्तद्विधेयविधिपूद्भवतीह शक्तिः ॥ १३७ ।

इत्थं हरः स्तुतिपदैः परितोषितात्मा
प्रत्यक्षतामुपगत[1] श्शरणागतस्य ।
आनायि लिङ्गमिह यत्तदमुष्य देव
कर्तुं मनः स्पृहयतीश पुनः प्रतिष्ठाम् ॥ १३८ ॥

[2] अन्तःसालस्योत्तरस्यां दिशि स्वं
लिङ्गञ्चैतत्स्थापय त्वं यथेष्टम् ।
दृष्ट्वा भूयस्सज्जना मां नमन्तु
संपूर्णन्ते तत्फलं संलभन्ताम् ॥ १३९ ॥

(नो चेत्तेषां दर्शनं निष्फलं स्यात्
[3] इत्युक्त्वान्तर्धानमागात्तदानीम् ।)

---

[1] अ. शरणं ।
[2] अ. अन्तश्शालस्यो ।
[3] अ. इत्येवमुक्त्वान्तरधाच्छिवस्सः (?)

आकर्ण्य देववचनं हनुमान्प्रतीतः
प्रातिष्ठिपत्तदनु लिङ्गमनुत्तमं तत् ।
सम्यङ्मुहूर्तमनुसृत्य रघूत्तमोक्त्या
तद्वायुजेश्वरसमाह्वयमेतदासीत् ॥ १४० ॥

यत्राद्यापि च पुण्डरीकनगरं कावेरिकामाधवौ
पश्चान्मातुलमन्दिरस्य गमनं सम्भाषणं ज्ञातिभिः ।
पुस्तस्थापनरामनाथचरिते संप्रोदिते यत्नतः
श्रीमच्छङ्करदेशिकेन्द्रविजये सर्गोऽष्टमः प्रस्थितः
॥ १४१ ॥

॥ इति श्रीशङ्करविजये व्यासाचलीये
अष्टमस्सर्गः ॥

---

## ॥ अथ नवमस्सर्गः ॥

श्रीगन्धमादनगिरिः प्रथितोऽम्बुराशौ
संतिष्ठते जलगतः स्थिरतामुपेतः ।
देवोऽपि तत्र गिरिजासहितस्समास्ते
क्षेत्रं ततः खलु पुरातनमेतदाहुः ॥ १ ॥

[1]आगत्य तत्र शिवमर्चयतेऽनुघस्त्रं
दिव्यप्रसूनसहितोऽप्सरसां निकायः ।
देवं समर्च्य दिवमेव किल प्रयाति
स ह्यष्टधा गुणगताश्शिवभक्तियोगात् ॥ २ ॥

तस्मिन्समर्चयति देवमनन्यभक्त्या
कुम्भोद्भवो मुनिरथाऽऽगमदुग्रतेजाः ।
देवं समर्चिचयिषुर्बहिरेव तस्थौ
पूजावसानसमयं प्रतिवीक्षमाणः ॥ ३ ॥

पूजां विधाय सहसाप्सरसां गणोऽयं
बाह्यस्थितं मुनिमवैक्षत पृष्टवांश्च ।
कस्त्वं किमर्थमिह चागमनं गिरौ ते
सोऽप्यब्रवीद्द्विजवरोऽयमनिन्द्यरूपः ॥ ४ ॥

दृष्ट्वा शिवं सह समर्चयितुं भवान्या
देवश्शिवो गिरिजया सह सन्निधत्ते ।
मर्त्यो न सञ्चरणयोग्य इहाद्रिमध्ये
देवाधिकारवसुधेयमतश्चरामः ॥ ५ ॥

---

[1] अ आगम्य ।

मर्त्यो न शक्त इह सञ्चरणाय किं वा
योग्यत्वमेव मनुजस्य न वेत्युदीर्यम् ।
तच्च द्वयं खलु न सङ्गतमेव युक्त्या
शक्तिर्न चेत्कथमिहागमनं मम स्यात् ॥ ६ ॥

योग्यत्वधर्मविरहोऽस्ति न चापि देव्य
स्सर्वत्र भूसुरजने ह्यधिकार एव ।
विप्राधिकारमखिलं खलु शास्त्रजातं
विप्रा वदन्ति निगमार्थविदो महान्तः ॥ ७ ॥

देवस्समोऽयमुभयोरपि दिव्यवध्वः
मर्त्यस्य देवनिवहस्य न काचिदत्र ।
संशीतिरस्ति यदिवेह सदाशिवोऽयं
पक्षे पतेत्पतितमेव मनुष्यजातम् ॥ ८ ॥

सख्योऽपसारयत दुर्वचनाधिराजं
वारांनिधौ क्षिपत वा कुरुतात्मनाथाम् ।
कुण्डीं विशुद्धसलिला[1]मपि यात शीघ्रं
क्षेत्रं यथा न पुनरेति तथा [2]विधेयः ॥ ९ ॥

उक्तोऽप्ययं परुषवाक्यमनिन्दितात्मा
प्रोचे न किञ्चिदपि शान्तमना जगाम ।
गच्छन्नसौ पथि निरूपितवानथेदं
क्षेत्रं तदा मनुजयोग्यमिदं[3] करिष्ये ॥ १० ॥

रामे प्लवङ्गसहिते प्रतियाति लङ्कां
तत्प्राप्तिमार्गमनुपश्यति कुम्भजातः ।
गन्धाद्रिमन्तरगतं प्रविधाय सेतुं
प्राबन्धयज्जलनिधौ मुनिराप्तकार्यः ॥ ११ ॥

---

[1] का. मपयात ।
[2] अ. विधेयम् ।
[3] अ. अहं ।

बद्धेऽपि सेतुकरणे पुनराययुस्ता-
स्संसेवितुं पशुपतिं गिरिजासनाथम् ।
कुम्भोद्भवोऽपि विहितोपहसः पुरस्ता-
त्तासाञ्च तस्य पुनरप्यभवद्विवादः ॥ १२ ॥

साधारणं पदमिदं न मनुष्ययोग्यं
देवादिसेव्यमिति यद्ब्रुवते भवत्यः ।
मर्त्याङ्गना भवत मर्त्यविदूषिकास्त-
च्छापं ददाविति मुनी रुषितो महात्मा ॥ १३ ॥

शान्तः पुमानिति न पीडनमस्य कार्यं
शान्तोऽपि पीडनवशात्क्रुधमुद्वहेत्सः ।
शीतस्सुखोऽपि मथितः खलु चन्दनद्रु-
स्तीव्रं हुताशजनको भवति क्षणेन ॥ १४ ॥

संप्रार्थितश्चरणयोः पतिताः पुरस्ता
दन्वग्रहीत्करुणया किल कुम्भयोनिः ।
श्रीपार्वतीपतिपदाम्बुजभक्तियुक्ता-
स्तत्पूजनासु निरता भवतेति मन्दम् ॥ १५ ॥

यश्चोद्वहेत्स तु भविष्यति पूजकोऽस्मिन्
कन्या भवत्कुलभवास्सुकुमारगात्रीः ।
तस्मात्ततः प्रभृति तत्कुलकन्यकानां
भर्तार एव पशुपं किल पूजयन्ति ॥ १६ ॥

उद्दिश्य सेतुमनघं बहुपातकस्सन्
आजन्मनरस्वकृतपातकराशिमुच्चैः ।
सङ्कीर्तयन् व्रजति यः परिमुच्यतेऽसौ
सेतुं विलोक्य सहसाखिलपातकेभ्यः ॥ १७ ॥

यः पातकी व्रजतु कीर्तयतु स्वपापं
छत्रादि वर्तयतु जीवतु भैक्षवृत्त्या ।
रामस्य कीर्तिमिव मूर्तिमतीं स पश्येत्
सेतुं भवाब्धितरणेऽपि च सेतुभूतम् ॥ १८ ॥

श्रीगन्धमादनगिरौ किल वारिराशौ
स्नात्वानुघस्त्रमनुतर्प्य च देवतादीन् ।
संदृश्य गन्धकुसुमादिभिरर्चयेद्यः
श्रीरामनाथमभिवाञ्छितमेति मर्त्यः ॥ १९ ॥

नापर्वणीति वचनं न निषेधतीह
स्नानं तदन्यविषयं पुरुषोत्तमादेः ।
तस्मात्प्रशस्तमिह माघनिमज्जनञ्च
कुर्वीत पुण्यदिवसेष्विह पुण्यमिच्छुः ॥ २० ॥

सूर्योपरागदिवसे विहितोपवासः
स्नात्वा पुमान्यदि ददीत किमप्यनन्तम् ।
सेतौ गवादि ददतो न फलं गणेयं
शेषेण नैकलपनेन किमन्यमर्त्यैः ॥ २१ ॥

सेतुर्वरो विविधपातकपुञ्जहन्ता
शैलोऽपि तत्र रघुनन्दननामधेयः ।
यत्रापि सेतुमभिनद्भगवान् स कोट्या
चापस्य तीर्थमिदमुत्तममाहुरार्याः ॥ २२ ॥

[1]क्रुध्यन्प्रभुं निहतवानपि[2] राक्षसेन्द्रं
तद्बुद्धिमांस्त्रिषु पदेषु बिभेद सेतुम् ।
नूनं स्वकीयधनुषा न [3]तु राक्षसाना-
मत्रागमं निर्विविवारयिषुः प्रभुत्वात् ॥ २३ ॥

---

[1] का· प्रभुः । [2] अ· अधि ।
[3] अ· ननु ।

आत्मात्मजाया क्षणदाचराणां
[1]शिरोविलेखं मनसात्र पश्यन् ।
मन्ये बिभेद स्वशरासनेन
सेतुं त्रिधासौ कृतकृत्य [2]आयन् ॥ २४ ॥

तीर्थेऽत्र मज्जनकृतां फलमन्यतीर्था-
ज्जायेत कोटिगुणितान्विति सूचनाय ।
कोट्या ध्रुवं स्वधनुषो बिभिदे स राम-
स्सेतुं विभेदनविधौ बहुसाधनोऽपि ॥ २५ ॥

धनुष्कोटौ तीर्थे मुनिजननिषेव्येऽमितफले
कृतस्नाना धन्या जहाति दुरितं दुष्परिहरम् ।
विधूतांहोजालाः परिचितसुरा नन्दनवने
सदा सङ्क्रीडन्ते प्रचुरतरभोगैरुपचिताः ॥ २६ ॥

आसाद्य [3]तीर्थमिदमक्षयपुण्यधस्त्रे
स्नात्वा बलेन ददतोऽस्य फलं न मेयम् ।
दत्तं [4]पणं द्विगुणतामुपयाति काला-
त्तीर्थे वितीर्णमधुनैव बहुत्वमेति ॥ २७ ॥

रामेत्युदीर्य बहुशः खलु तीर्थदृश्वा
मुच्येत दोषानिवहात्किमु मज्जनादेः ।
आयान्ति तीर्थतनवो मुनयोऽप्यमुष्मा-
देष्यन्निहन्तुमनसो[5] दुरितं प्रमादात् ॥ २८ ॥

आदिश्यैवं भिक्षुराजस्सशिष्य
स्सेतुं दृष्ट्वा पुण्यतीर्थं निषेव्य ।
पश्यन्देशान्मातुलीयं जगाम
गेहं दाहं तस्य पुस्तेन सार्धम् ॥ २९ ॥

---

[1] अ विलेखान् ।
[2] अ आसीत् ।
[3] अ पुण्यं ।
[4] अ. फलं ।
[5] अ अनघा ।

श्रुत्वा किंचित्खेदमापेदिवान् स
मत्वा मत्वा धैर्यमापेदिवान्सः ।
श्रावं श्रावं मातुलेयस्य तीव्रं
दाहं गेहस्यानुकम्पां व्यधत्त ॥ ३० ॥

विश्वस्य मां निहितवानसि पुस्तभारं
तच्चाद हुतवहः परितः प्रमादात् ।
तावन्न मे सदनदाहकृतोऽनुतापो
यावांस्तु पुस्तकविनाशकृतो मम स्यात् ॥ ३१ ॥

इत्थं ब्रुवन्तं [1]तमथाभ्यभाणीत्
पुस्तं गतं बुद्धिरवस्थिता मे ।
उक्त्वा समारब्ध पुनश्च टीकां
कर्तुं स धीरो यतिबृन्दवन्द्यः ॥ ३२ ॥

दृष्ट्वा बुद्धिं मातुलस्तस्य भूयो
भीतः प्रास्यद्भोजनं तन्मतिघ्नम् ।
किंचिद्रव्यं पूर्ववन्नाऽक्षमिष्ट[2]
टीकां कर्तुं केचिदेवं ब्रुवन्ति ॥ ३३ ॥

इत्थं स तीर्थनिकरं परिषेव्य शान्तो
द्रष्टुं ययौ स्वगुरुमेव पुनस्स तस्मै ।
देशाय यत्र वसति स्म स देशिकेन्द्र-
स्तस्मै नमो व्यधित [3]वृत्तमथोऽभ्यधत्त ॥ ३४ ॥

शिरःकपालं किल देशिकस्य खण्डं जनाः प्राहुरदो जिघृक्षुः ।
कश्चित्तिषेवे बहुधस्तमेन योगी जितात्मा बहुसिद्धिकामः
॥ ३५ ॥

---

[1] अ. मथ न्यगादीत् ।

[2] अ. नाक्षमिष्ट ।

[3] अ. अथ; का अथाभ्यधात्सः ।

तत्तादृशं सिद्धिदमीक्षमाणस्संसेव्य संमन्त्र्य मिथस्तमेति ।
दिनानि भूयांसि किलागुरस्य तं जातहार्दो भगवानथोचे
॥ ३६ ॥

योगिन्! न्यसेविषि चिरं बहुमानतोऽहं
किञ्चेप्सितं तव ददानि यदत्र शक्यम् ।
मर्त्यं हि तत्परहिताय शरीरमाप्यं
नो चेत्प्रयोजनमनेन किमस्ति लोके ॥ ३७ ॥

अखण्डमूर्धन्यकपालमाहुस्संसिद्धिदं साधकपुङ्गवेभ्यः ।
विना भवन्तं बहवो न सन्ति तद्वत्पुमांसो भगवान्पृथि-
व्याम् ॥ ३८ ॥

तान्याचितुं न क्षमते मनो मे
को वेषधारी स्वशरीरमुज्झेत् ।
भवान्विरक्तो न शरीरमानी
परोपकाराय धृतात्मदेहः ॥ ३९ ॥

जनाः परक्लेशकथानभिज्ञा
नक्तंदिवं स्वार्थकृतात्मचित्ताः ।
रिपुं निहन्तुं कुलिशाय वज्री
दधीचिमार्दत्किल वाञ्छितास्थिः ॥ ४० ॥

वपुर्धरन्ते परतुष्टिहेतोः केचित्प्रशान्ता दयया परीताः ।
अस्मादृशाः केचन सन्ति लोके स्वार्थैकनिष्ठा दयया
विहीनाः ॥ ४१ ॥

इत्युक्तवन्तं भगवानथाब्रवी-
न्मिथस्समायाहि करोमि ते मतम् ।
नाहं प्रकाशं वितरीतुमुत्सहे
शिरःकपालं विजनं समाश्रय ॥ ४२ ॥

शिष्या विदन्ति यदि चिन्तितकार्यमेत-
योगिन् मदेकशरणा विहतं विदध्युः ।
को वा सहेत वपुरेतदपोहितुं स्वं
को वा क्षमेत निजनाथशरीर[1]मोषम् ॥ ४३ ॥

तौ संविदं व्यतनुतामिति संप्रहृष्टो
योगी जगाम मुदितो निलयं मनस्वी ।
श्रीशङ्करोऽपि निजधामनि जोषमास्त
नो[2] वेद कश्चिदपि भावमसौ मनोगम् ॥ ४४ ॥

शूली त्रिपुण्ड्री परितो विलोकी
कङ्कालमालाकृतगात्रभूषः ।
संरक्तनेत्रो मदघूर्णिताक्षो
योगी ययौ देशिकवासभूमिम् ॥ ४५ ॥

शिष्येषु [3]शिष्टेष्वपि दूरगेषु
स्नानादिकार्याय विविक्तभाजि ।
श्रीदेशिकेन्द्रे च सनन्दनाख्ये
भीत्या स्वदेहं व्यवधाय गूढे ॥ ४६ ॥

तं भैरवाकारमुदीक्ष्य देशिक
स्त्यक्तुं शरीरं व्यधित स्वयं मनः ।
आत्मानमात्म[4]न्युदयुङ्क्त योजयन्
समाहितात्मा करणानि संहरन् ॥ ४७ ॥

त्रिशूलमुद्यम्य निहन्तुकामं
गुरुं यतात्मा तमुदैक्षतान्तः ।
स्थितश्चुकोप ज्वलिताग्निकल्प-
स्स नन्दनो नाम गुरोर्हितैषी ॥ ४८ ॥

---

[1] अ. मोक्षम् । [2] अ नोवाच
[3] अ. शिष्टेषु विदूरगेषु । [4] का न्यधियुङ्क्त ।

स मन्त्रसिद्धो नृहरेर्नृसिंह्यो
बभूव रोषाद्विनिहन्तुकामः ।
ददार तं क्रूर[1]नखो नखाग्रै
र्यथा हिरण्यं [2]परिपात्स्वभक्तम् ॥ ४९ ॥

तद्रोमकूपेषु समं हुताशाः
प्रजज्वलुर्भीषितसर्वलोकाः ।
ज्वलन्सहेतिर्भृशमुत्पपात
प्रासादमुख्यं विहिताट्टहासः ॥ ५० ॥

प्रासादमारुह्य स सिंहनादं
ननाद चोच्चैर्भुवनं [3]वितेने ।
पृथ्वी चकम्पे भुवनान्तरीपा
वार्धिस्तथाद्रिर्युसतोऽप्यवीक्षन् ॥ ५१ ॥

आकर्णयंस्तं निनदं बहिर्गता
उपागमन्नाकुलचित्तवृत्तयः ।
व्यलोकयन्भैरवमग्रतो मृतं
ततो विमुक्तश्च गुरुं सुखोषितम् ॥ ५२ ॥

कल्पान्तरुद्रमिव वह्निकणान्वमन्तं
सिंहाकृतिं झटिति विस्मृतमर्त्यभावम् ।
तुष्टाव तं गुरुवरः शमयन्रुषाग्निं
वाक्पाथसा जगदिदं परिपातुमिच्छन् ॥ ५३ ॥

नरहरे हर कोपमनर्थदं तव रिपुर्निहतो भुवि वर्तते ।
कुरु कृपां मयि देव सनातनीं जगदिदं भयमेति भवद्रुषा
॥ ५४ ॥

---

[1] का. तरैः ।  [2] अ परियान् ।
[3] का. विधाय ।

तव वपुः किल सत्त्वमुदाहृतं तव हि कापनमण्वपि नोचि-
तम् ।
तदिह शान्तिमवाप्नुहि शर्मणे हरगुणं हरिराश्रयसे कथम्
॥ ५५ ॥

[1] स किल भीतिषु देवतमं स्मरन्
सकलभीतिमपोह्य सुखी पुमान् ।
भवति किं प्रवदामि तवे[2]क्षणे
परमदुर्लभमेव तदीक्षणम् ॥ ५६ ॥

स्मृतवतस्तव पादसरोरुहं
मृतितुदं पुरुषस्य विमुक्तता ।
तव कराभिहतो मृतभैरवो
न हि स एष पुनर्भवमेष्यति ॥ ५७ ॥

दितिजसूनुममुं व्यसनार्दितं
सकृदरक्षदुदारगुणो भवान् ।
सकलगत्वमुदीरितमस्फुटं
प्रकटमेव विधित्सुरभूत्पुरः ॥ ५८ ॥

सृजसि विश्वमिदं रजसात्मभूः
स्थितिविधौ श्रितसत्त्व उदायुधः ।
अवसि तद्धरणे [3]तमसावृतो
हरसि देव तदा हरसंज्ञितः ॥ ५९ ॥

न च जनिर्न गुणास्तव तत्त्वतो
जगदनुग्रहणाय भवादिकम् ।
तव पदं खलु वाङ्मनसातिगं
श्रुतिवचश्चकितं तव बोधकम् ॥ ६० ॥

---

[1] अ सकल । [2] अ तवेक्षणैः ।
[3] अ. आहतो ।

नरहरे तव नामपरिश्रवात्
प्रथमगुह्यकदुष्टपिशाचकाः ।
अपसरन्ति विभो सुरनायका
न हि पुरःस्थितये प्रभवन्त्यपि ॥ ६१ ॥

द्विजकुलं श्रुतिराह तवाऽऽस्यजं
नृपकुलं तव बाहुयुगोत्थितम् ।
विशमिमं नरसिंह तवोरुजं
चरणजं वृषलं चरमं विदुः ॥ ६२ ॥

श्रुतिसमीरितकर्मफलेक्षण-
प्रतिभुवं [1]प्रविहाय विदं जनम् ।
यजति देव भवन्तमिहादरात्
न हि यजिः फलदा क्षमतेऽप्रभुः ॥ ६३ ॥

सर्वार्थसाधनविधावदशप्रदीप-
मन्विष्य दैत्यहृतमेष भवांस्तिरोगम् ।
पुंयोगदोषविरहात्स्वत एव मान-
मादाय मत्स्यतनुराहृत वेदराशिम् ॥ ६४ ॥

भूत्वा पयोधिमथने कमठः पुरा त्वं
संमज्जतो नु मथिमन्दरपर्वतस्य ।
पृष्ठं व्यदाः सकललोकहितं चिकीर्षुः
श्रीमन्नुदुत्सुरिव गात्रगतां च कण्डूम् ॥ ६५ ॥

दंष्ट्रान्तरे भुवमिमां जलधौ निमग्ना
मारोप्य मार्गगतदैत्यवरं निहत्य ।
उद्धृत्य पूर्वमिव तां समतिष्ठिपत्त्वां
भूदारमूर्तिरुदमज्जदुदन्वतोऽग्रे ॥ ६६ ॥

---

[1] अ. प्रविधाय विदन् जनः ।

प्रह्लाददैत्यतनयेन हरेर्विमुखत्वे
प्रोक्ते तदीयवचनं [1] मतमेव कुर्वन् ।
स्तम्भं विदार्य सहसोत्थितवान्नखाग्रै-
र्वक्षोऽसुरस्य भगवान् बिभिदे विशालम् ॥ ६७ ॥

भूत्वा वटुः किल भवान् बलियज्ञशालां
गत्वा पदत्रयमयाचत वासहेतोः ।
पश्चात्क्रमेण ववृधे विममे च पादै-
र्लोकांस्त्रिभिर्बलिमथो भगवान्बबन्ध ॥ ६८ ॥

तातस्य मारणरुषा जमदग्निपुत्रो
भूत्वावधीर्नरहरे कृतवीर्यसूनुम् ।
[2] यश्चाबिभः करसहस्रमभूत्पुरस्तात्
द्रव्यं ग्रहीतुमनसां किल तस्कराणाम् ॥ ६९ ॥

राजन्यकं समभिषिक्तमिह त्रिसप्त-
वारान्प्रभो पृथुबलं [3] बहु बाहुवीर्यैः ।
श्रीजामदग्न्यवपुरुत्परशुर्निहत्य
[4] श्रीकाश्यपाय पृथिवीमददः [5] किलैषाम् ॥ ७० ॥

पौलस्त्यपीडित [6] सुरार्थनया पृथिव्यां
पुत्रो भवान् दशरथस्य बभूव साक्षात् ।
प्राप्ताभिषेकविहतेर्वनमीयुषस्ते
सीतां जहार हरिणच्छलतो दशास्यः ॥ ७१ ॥

कान्तारपर्वतनदीतटदुर्गदेशान्
गत्वा व्यचेष्ट भगवान् दयितां दयालुः ।
गच्छन् क्वचित्पतगराजमपश्यदार्तं
संलूनपक्षतिमचेष्टममन्ददेहम् ॥ ७२ ॥

---

[1] अ. कृतमेव, क. जितमेव ।
[2] अ. यश्चाबिभः ।
[3] अ. पृथु ।
[4] अ. कश्यपाय ।
[5] अ, किलेमाम् ।
[6] अ. धरा ।

श्रीमज्जटायुवचनादधिगम्य सीतां
वृत्तान्ततो रवितनूजसखित्वमाप ।
हत्वैन्द्रमुद्धतबलं जवनस्य सूनुं
संप्राहिणोद्दशमुखस्य पुराय देवः ॥ ७३ ॥

संपुप्लुवे जलनिधिं स जगाम लङ्कां
सीतामलोकत ददावथ चाङ्गुलीयम् ।
नत्वा बभञ्ज वनमक्षकमाजिहिंस
लङ्कां ददाह पुनरादित मूर्धरत्नम् ॥ ७४ ॥

आदाय मूर्धमणिमम्बुनिधिं स तीर्त्वा
रामाय वृत्तमखिलं कथयाम्बभूव ।
रामो ययौ कपिभिरुद्धतवायुवेगै-
स्तीर्त्वाम्बुधिं विहितसेतुपथेन लङ्काम् ॥ ७५ ॥

हत्वा दशाननमथो सबलं समित्रं
सीतामवाप्य दनुजं विदधेऽधिराजम् ।
आदाय शुद्धचरितां जनकात्मजां तां
आरोप्य पुष्पकमनेन ययावयोध्याम् ॥ ७६ ॥

बह्वीस्समा वसुमतीमनुशिष्य सम्यक्
भुक्त्वा च भोगमखिलं [1]भुवि देववत्सः ।
आरोप्य [2]राजधुरमात्मगतां तनूजे
स्वीयैस्समं निजपदं प्रतिपेदिवांस्त्वम् ॥ ७७ ॥

भूत्वा दाशरथिर्गतो मुनिवनं भङ्क्त्वा धनुर्जानकीं
[3]भेजे प्राप्तपदच्युतिर्वनगतस्सख्यञ्च भानोस्सुते ।
हत्वा वालिनमम्बुधिं कपिगणैर्बध्वा जघान द्विषं
जानक्या सहितो भवान्पुनरगाद्रम्यामयोध्यां किल
॥ ७८ ॥

---

[1] अ. दिवि ।
[2] अ. राज्य ।
[3] अ. लेभे ।

भूयश्चानकदुन्दुभेर्नरहरे श्रीरोहिणीगर्भगो
[1]दुष्टाक्रान्तधरार्थितो हलधरः श्रीरामसंज्ञोऽभवः ।
हालापानमदान्धकारितमनास्संरक्तनेत्रो युवा
कालिन्दीं विमला[2]म्भसं हलमुखेना [3]कर्ष मूचेजुषा।
॥ ७९ ॥

तस्मादेव सुरार्थितस्सुरहितं कर्तुं विकारोज्झितो
देवक्यामजनिष्ट दुष्टनृपतिव्याजेन जातान्भुवि ।
दैत्यान्हन्तुमनाः पदाब्जशरणांस्त्रातुं दयालुर्भवान्
हत्वा कंसममोचयच्च जनकं सर्वान्यदून्वर्धयन् ॥ ८० ॥

विप्रेषु दूरचरितेषु कलौ विवृद्धे
नष्टोत्तरे [4]च निजवर्त्मनि धर्महानौ ।
कल्क्याख्यया द्विजवरस्य गृहे विशिष्टे
सर्वं पुनर्नवयितुं भवितासि देव ॥ ८१ ॥

देवावतारतनवः कथिता दशेह
कष्टं विनाश्य शुभया दशया अवन्तु ।
पृथ्व्यादिभूतगणव[5]त्परितोषनिष्ठा-
स्ताभ्यो नमो जगदमूः परिपालयन्तु ॥ ८२ ॥

एवं विशिष्टनुतिभिर्नृहरौ प्रशान्ते
स्वं भावमेत्य मुनिरेष बभूव शान्तः ।
स्वप्नानुभूतमिव शान्तमना[6]स्तमेन-
मात्मानमात्मगुरवे प्रणतश्चकार ॥ ८३ ॥

चित्तानुवर्ती निजधर्मचारी
भूतानुकम्पी तनुवाग्विभूतिः ।
कश्चिद्विनेयोऽजनि देशिकस्य
यं तोटकाचार्यमुदाहरन्ति ॥ ८४ ॥

---

[1] अ दैत्या ।
[2] अ. हसन् ।
[3] अ. आकृष्ट आवीरुषा ।
[4] अ. निगमवर्त्मनि ।
[5] का. परितोऽपि ।
[6] अ. स्व ।

स्नात्वा पुरा क्षिपति कम्बलवस्त्र[1] मुख्यै
रुच्चासनं मृदुशतैस्स ददाति नित्यम् ।
सन्तक्ष्य दन्तपरिशोधनकाष्ठमग्र्यं
[2] बाह्यावनिं गतवते सलिलादिकञ्च ॥ ८५ ॥

श्रीदेशिकाय गुरवे [3] तनुमार्द्रवस्त्रं
विश्राणयत्यनुदिनं विनयोपपन्नः ।
श्रीपादपद्मयुगमर्दनकोविदश्च
छायेव देशिकमसौ भृशमन्वियाय ॥ ८६ ॥

गुरोस्समीपे न तु जातु जृम्भते
प्रसारयँन्नो चरणौ निषीदति ।
[4] नोपेक्षते वीं बहु वा न भाषते
न पृष्ठदर्शी पुरतोऽस्य तिष्ठति ॥ ८७ ॥

तिष्ठन्गुरौ तिष्ठति संप्रयाते
गच्छन् ब्रुवाणे विनयेन शृण्वन् ।
[5] अनूच्यमानो विहितं विधत्ते
यच्चाहितं तत्कुरुते न तस्य ॥ ८८ ॥

भगन्दरो नाम वमन्नजस्रं
रक्तं विरक्तानपि बाधमानः ।
संबाधते देशिकशङ्करं स्म
उपेक्षितो व्याधिरनल्पतापः ॥ ८९ ॥

---

[1] का· मुख्यमुच्चासनं मृदु शनैः ।
[2] अ· बाह्यादिकं ।
[3] अ· तनुमार्जवस्त्रं ।
[4] अ· नावेक्षते ।
[5] अ· अनुच्यमानोऽपि हितं ।

तच्छोणिताक्तवसनं प्रतिघस्रमेष
कासारतीरगशिलातलपृष्ठभागे ।
नेनेक्ति भक्तिवशगो न जुगुप्सतेऽसौ
यावन्मलं तदपगच्छति तावदद्धा ॥ ९० ॥

किञ्चित्समाधाय पुरोक्तमंशुकं
निर्णेतुकामस्सरसीतटं प्रगे ।
प्रयाति संक्षाल्य विशुद्धबुद्धये
जिघ्रत्यभीक्ष्णं पुनरेव धावति ॥ ९१ ॥

एवं यतात्मा वसनं दिनेदिने
प्रक्षाल्य [1]संवेष्ट्य ददाति भूयसे ।
शोकोऽपि किञ्चिन्मनसीति वर्तते
नाशक्नुवं किञ्चिदपीह वेदितुम् ॥ ९२ ॥

प्रक्षाल्यमानं वसनं यथात्मन-
श्शिरस्समाहन्ति शिलाश्च कर्कशाम ।
भक्त्या परं क्षालयतो महात्मनः
पद्यात्मना सा परिणाममीयुषी ॥ ९३ ॥

श्रीमद्गुरोः पादसरोजमूला-
त्तदा [2]श्रया तत्करुणावसाना ।
भक्तिर्लता तोटकवृत्तवृन्त-
हृद्यानि पद्यानि फलान्यवाप ॥ ९४ ॥

---

[1] अ. संशोध्य ; क-का. संशोध्य । [2] अ. तदाश्रयात् ।

भक्तचुरुकर्षात्प्रादुरासन्यतोऽस्मा-
त्पद्यान्येवं तोटकाख्यानि सन्ति ।
तस्मादाहुस्तोटकाचार्यमेनं
लोके शिष्टाः शिष्ट[1]वर्यं मुनीन्द्रम् ॥ ९५ ॥

अद्यापि तत्प्रकरणं प्रथितं पृथिव्यां
तत्संज्ञया लघु महार्थमनल्पनीति ।
शिष्टैर्गृहीतमतिशिष्टपदानुविद्धं
वेदान्तवेद्यपरतत्त्वनिवेदनं यत् ॥ ९६ ॥

यत्रास्त्यसुराङ्गनाविवदनं चापस्य कोट्याह्वयं
तीर्थं वर्णितमुग्रभैरवजयः [2]श्रीतोटकेड्येडनम् ।
श्रीमच्छङ्करदेशिकेन्द्रविजये व्यासाद्रिणा निर्मिते
सर्गोऽयं नवमो गतोऽत्र महितः सानन्दनो नन्दनः
॥ ९७ ॥

॥ इति श्रीशङ्करविजये व्यासाचलीये
नवमस्सर्गः ॥

---

[1] अ. वंश्यं ।

[2] अ. श्रीतोटकस्येडनं ।

## ॥ अथ दशमस्सर्गः ॥

---

भगन्दरव्याधिनिपीडितं गुरुं
निरीक्ष्य शिष्यास्समबोधयञ्छनैः ।
नोपेक्षणीयो भगवन्महामयः
संपीडयन् शत्रुरिवर्धिमाप्नुयात् ॥ १ ॥

ममत्वहानाद्भवता शरीरके
न गण्यते व्याधिकृतेतिरीदृशी ।
पश्यन्त एवान्तिकवर्तिनो वयं
भृशातुरा [1]दुस्सहतद्व्यथासहाः ॥ २ ॥

चिकित्सका व्याधिनिदानकोविदा
स्संपृच्छनीया भगवन्नितस्ततः ।
प्रत्यक्षवत्संप्रतियन्ति पूरुषा
[2]जीवातुवेदं गदितार्थसिद्धयः ॥ ३ ॥

[3]निर्देशमात्राद्भगवन् भिषग्वरान्
यतः कुतश्चिद्वयमानिनीषवः ।
सन्देशमात्राद्भवतो धुतैनसो
निशम्य नागच्छति नाम कः प्रभो ॥ ४ ॥

उपेक्षमाणेऽपि गुरावनास्थया
शरीरकादौ सुखमात्मनीश्वरैः ।
नोपेक्षणीयं गुरुदुःखदृश्वभि-
र्दुःखं विनेयैरिति शास्त्रनिश्चयः ॥ ५ ॥

---

[1] अ. स्मस्सहसा व्यथासहाः । [2] अ. जीवानुवेदं ।
[3] का. निदेश ।

स्वस्थे भवत्पादसरोरुहद्वये
स्वस्था वयं ते[1] मधुपायिवृत्तयः ।
तस्माद्भवत्तावकविग्रहो यथा
स्वस्थस्तथा वाञ्छति पूज्य नो मनः ॥ ६ ॥

व्याधिर्हि जन्मान्तरपापपाको
भोगेन तस्मात्क्षपणीय एषः ।
अभुज्यमानः पुरुषं न मुञ्चेत्
जन्मान्तरेऽपीति हि शास्त्रवादः ॥ ७ ॥

व्याधिर्द्विधा नः कथितो[2] विदद्भिः
कर्मोद्भवो धातुकृतस्तथेति ।
आद्यक्षयः कर्मण एव लीनात्
चिकित्सया स्याच्चरमोदितस्य ॥ ८ ॥

...ोया कर्मण एव संक्षयात्
व्याधिः प्रवृत्तो न चिकित्स्यते मया ।
पतेच्छरीरं यदि तन्निमित्ततः
पतत्ववश्यं न बिभेमि किञ्चन ॥ ९ ॥

सत्यं गुरोस्ते न शरीरलोभः
स्थिराय तस्मै स्पृहयालुता नः ।
त्वज्जीवनेनैव हि [3]जीवनं न
श्चराचराणां जलमेव जीव ॥ १० ॥

स्वगंकृतार्थाः परतुष्टिहेतो
र्जीवन्ति सन्तो निजदेहरक्षाः ।
तस्माच्छरीरं परिरक्षणीयं
त्वयापि लोकस्य हिताय विद्वन् ॥ ११ ॥

---

[1] अ. यन्मधु । [2] अ वदद्भिः ।
[3] अ जीवनं नो यथा चराणां ।

निर्बन्धतो गुरुवरः प्रददावनुज्ञां
दिग्भ्यो भिषग्वरसमानयनाय तेभ्यः ।
नत्वा गुरुं प्रतिदिशं प्रययुः प्रहृष्टाः
शिष्याः प्रवासकुशला गुरुभक्तिभाजः ॥ १२ ॥

राजेव वारणपतिं गिरिमारुरोह
पूर्वं रविः पृतनयेव गभस्तिराज्या ।
जेतुं विपक्षमिव कृष्णमहान्धकारं
तेषु प्रयत्सु मुनिवर्यसमाश्रयेषु ॥ १३ ॥

शीघ्रं पलायत तमोऽरिरतीव भीतो
भानोर्नवेन पृथुरश्मिबलेन नुन्नः ।
कूजन्मधुव्रतकदम्बकमुच्चकाशे
पद्मं रथाङ्गमिथुनं समियाय भूयः ॥ १४ ॥

स्नात्वा द्विजा नदनदीसरसीषु गत्वा
दत्वार्घ्यमब्जसुहृदे रवये प्रजेपुः ।
दर्भाङ्कुराकलितदोर्युगलास्तदीय-
बिम्बे निविष्टनयना जितमानसाश्च ॥ १५ ॥

संप्रोषिते रविनृपे तिमिराख्यचोरै-
र्ग्रस्तं बभूव निखिलं भुवनं विशेषैः ।
तस्मिन्नधिष्ठितवति स्वपदं भयेन
मन्ये पलायनपरैरिति वान्तमेतत् ॥ १६ ॥

प्रायो नृपं कविजना भिषजो वदान्यं
वित्तार्थिनः प्रतिदिनं कुशला जुषन्ते ।
तस्मादमी नृपपुरे विनिरीक्षणीया
इत्येव चेतसि मनोरथमादधानाः ॥ १७ ॥

तुङ्गैश्शृङ्गैरुच्छ्रितं सह्यशैलं
प्राप[1]न्भ्रान्ता शाङ्करीया विनेयाः ।
यस्मान्नद्यो लब्धजन्मान उच्चै-
र्वीरांनाथं यान्ति भर्तारमग्र्यम् ॥ १८ ॥

[2] उद्यच्छिरोलम्बिसुदीर्घपुच्छै-
र्गजेन्द्रकुम्भस्थलभेदनोत्कैः ।
प्रसारिताङ्गैर्लघु लङ्घमानै-
र्निषेवितं सिंहगणैर्नदद्भिः ॥ १९ ॥

एणैस्सशावैश्चटुलायताक्षैः
किञ्चित्परावृत्तमुखैस्सुभीतैः ।
समुच्चलद्भिस्सकृदीक्षमाणै-
र्निषेव्यमाणं मधुराङ्गशोभैः ॥ २० ॥

बृहच्छिलानामुपरि प्रविष्टै-
स्सङ्काचिताङ्गैर्बहु गर्जयद्भिः ।
व्यात्ताननैर्मूर्छितचञ्चलैर्णै-
रध्यासितं व्याघ्रगणैः क्वचिच्च ॥ २१ ॥

अनेकपादैर्बहुगण्डवप्रै-
र्गलज्जलैरुन्नतकुम्भकूटैः ।
विलम्बिलाङ्गूलकरश्मिदीप्तैः
निषेव्यमाणं करिभिस्सुरूपैः ॥ २२ ॥

मुनिजनैस्सहसा समुपेयिवान्
परिजनस्समवोचत कश्चन ।
गिरिवरेक्षणविस्मितमानसः
शुचिमनाश्शुचिदन्तधरो द्विजः ॥ २३ ॥

---

[1] अ. दान्ताः । [2] का. उद्यच्छिरोभिः पृथुदीर्घपुच्छैः ।

इह वसन्ति नदीतटसंश्रया
मुनिजना बहुसिद्धिमभीप्सवः ।
बहुतपश्चरणेषु कृतश्रमाः
विधुनपापचयारनुकृतादराः ॥ २४ ॥

विद्याधरा बहुसुखेऽत्र वने रमन्ते
विद्याधरीभिरमिताभरणाभिरिद्धाः ।
एला[1] फलामृदितगन्धिनदीजलस्थ-
ग्वातेन सेविततरे सुमनोऽभिरामे ॥ २५ ॥

सम्पश्यध्वं पादपा ये गिरिस्थाः
शाखा[2] भिस्ते संस्पृशन्ति स्वमूलम् ।
पुष्पैर्युक्तास्त[3] त्फलैस्तत्प्रवालैः
स्थाने तेषां पूर्णता येषु दृष्टा ॥ २६ ॥

निघृष्यमाणा वरदन्तिभिः स्फुटं
मुञ्चन्ति गन्धं बत चन्दनद्रुमाः[4] ।
विमुच्यमाना भुजगाङ्गवेष्टनैः
प्रायेण साम्ना खलता न याति ॥ २७ ॥

पश्य नृत्यति कलापिनी ध्रुवं
स्वं कलापमखिलं प्रसार्य सा ।
दिक्प्रसारितजटाकदम्बकं
[5]नृत्तशम्भुमनुकर्तुमिच्छया ॥ २८ ॥

---

[1] अ. फलत्रुटित ।
[2] अ. हस्तैः ।
[3] अ. सत्फलैस्सत्प्रवालैः ।
[4] अ. द्रवः ।
[5] अ. नृत्य ।

गजानां सत्पोताः कपटनिपुणै[1] र्बन्धविदुरै-
र्निपात्यन्ते वार्यां बहुविधनिनादैरुपहितैः[2] ।
महीध्रेऽस्मिन् प्राज्ञैः करिवरघटामन्तरगतां
प्रकुर्वाणैश्शूरै[3] रहह मनुजाः किञ्चन विदुः ॥ २९ ॥

गतेषु सर्वेषु [4] निपत्य वार्यां
शिशुं करीन्द्राः स्वकरं प्रदाय ।
समुद्धरन्तीह महाप्रयासात्
शिशौ तिरश्चामपि [5]हार्दभावः ॥ ३० ॥

अष्टाङ्गयोगसरणिं परिगृह्य केचित्
संयुञ्जते जितसदागतयो महान्तः ।
संलीनदुर्जयहृषीकगणाः स्थिराङ्गाः
कण्डूयितं कृतधियो हरिणास्तदङ्गैः ॥ ३१ ॥

पृथ्वीं जले तदपि तेजसि तच्च वायौ
तं व्योम्नि खञ्च महति प्रकृतौ तदत्र ।
[6] संगृह्य विश्वमखिलं परभूयमाप्ता-
स्तिष्ठन्ति वेदशिरसोऽवगतात्मतत्त्वाः ॥ ३२ ॥

यद्वायुपङ्घटितपादपघट्टनोत्थ-
वह्निस्तृणेषु पतितः प्रथिमानमेति ।
तद्भीतितो मृगगणः प्लवगाश्च सत्वा
धावन्ति मूढमनसो विदिशो दिशोऽत्र ॥ ३३ ॥

अनारतं क्षोभमवाप्नुवन्तं
पतिं नदीनामचलं प्रकृत्या ।
दृष्ट्वा शरव्याजवशेन शङ्के
हसत्यसौ भूमिधरस्सगर्वः ॥ ३४ ॥

---

[1] अ. बन्धुविधुरैः । [2] अ. उपचितैः; का. उपहृतैः ।
[3] अ. क्रूरैः । [4] का. निपात्य ।
[5] अ. हार्दपाशः । [6] का. संहृत्य ।

दृष्ट्वा समुद्रं हसनं ममापि
सञ्जायते प्राप्तविकारमेनम् ।
फेनायमानं विवशं पतन्त-
मितस्ततो मर्तुमिवालुठन्तम ॥ ३५ ॥

पुरा सपक्षास्सकला महीध्रा-
स्तेन स्म बाधन्त उपेत्य सर्वान् ।
चिच्छेद पक्षान्कुलिशेन वज्री
तेनाभवद्गोत्रभिदित्यभिख्या ॥ ३६ ॥

भीतास्तदानीं जलधिं प्रपन्ना
मैनाकमुख्या गिरयो महान्तः ।
ररक्ष तानैसवच्छरण्य
स्तेन प्रपन्नार्तिहरत्वमस्य ॥ ३७ ॥

प्रयान्त्यपूर्वं परिगृह्य भाण्ड-
मायान्ति तेनैव तथाम्बुराशिम् ।
आश्रित्य [1] सर्वेऽपि निजार्थमाप्ता-
स्सांयात्रिकाणां गतिरेष साक्षात् ॥ ३८ ॥

राजेव धर्मी सुसमृद्धिमानसौ
वेलामतिक्रामति नो कदाचन ।
युक्तोऽपि नित्यं बहुभिर्जलाशयै-
[2] र्वृद्ध्या महात्मा विनयाय कल्पते ॥ ३९ ॥

प्रसूय कन्यामिव रत्नजातं
ददात्यसावर्थिवराय हृष्यन् ।
ततोऽस्य रत्नाकरताप्रसिद्धि-
र्महान्पःप्रीणनकारको हि ॥ ४० ॥

---

[1] अ. वणिजोऽर्थं । [2] अ. वृद्ध्यन् ।

अथ सुरभिरुपागमत्प्रमोदी
वदति मुनीन्विषयेषु शिष्यविप्रे ।
रविमधुपगणैर्निषेव्यमाणः
श्रुतिसुखकोकिलकूजितेन सार्धम् ॥ ४१ ॥

नामतः श्रुतिसुखापि मञ्जरी
दर्शनीयतमतां गतापि सा ।
शोकदा भवति खल्वशोकजा
देहिनो विरहिणोऽत्र दुस्सहा ॥ ४२ ॥

पुष्पैश्शुभैः किसलयैरवनम्रशाखा
वृक्षा बभूवुरधिकं गिरिकाननस्थाः ।
पद्मानि पद्मनिलयाः परिहाय शीघ्रं
हुंकारिणो मधुकराम्तरुषण्डमीयुः ॥ ४३ ॥

मन्दं ववौ गिरिसरित्सलिलावगाही
वायुः प्रसूनरजसोपहितस्समन्तात् ।
चित्तं बभूव सहसा कलुषं जनानां
मूर्छामवाप जनता विरहाभितप्ता ॥ ४४ ॥

आस्वादयन्मधुरचञ्चुपुटेन मन्दं
पुंस्कोकिलो रसकषायितकण्ठनालः ।
मृद्वीं रसालकलिकां मदनास्त्रभूता-
मुद्दीपयन् कुसुमकार्मुकमुच्चुकूज ॥ ४५ ॥

परागाः प्रासूनः पवनचलनुन्नस्सुरभयो
गलन्तस्संव्यापन् गिरिवनभुवश्छादितलताः ।
सृजन्तश्शान्तानामपि च विकृतिं मानसगतां
[1]सुदूरं गच्छन्ती पथिकजनता द्रष्टुमनलम् ॥ ४६ ॥

---

[1] अ सुदुरात् ।

मधुव्रतानां परिपूर्णमेव त-
द्व्रतं यदेषां मधुपानसंज्ञितम् ।
नानाविधे पुष्परसे सहोदिते
बभूव तेषामपि चञ्चलं मनः ॥ ४७ ॥

[1]असना व्यमनाय केवलं
परितापाय विभासिमाधवी ।
मधुरा मधुलेहिगीतिका
विपरीता समजायताध्वगे । ४८ ॥

मन्दो वायुः कूजितं कोकिलानां
गीती रम्या षट्पदानां मदेन ।
पौष्पो गन्धस्सान्निधिश्चाङ्गनानां
चित्तं सर्वं सञ्जहाराशु पुंसाम् ॥ ४९ ॥

उपचितसुरभिश्रियं प्रपश्यन्
वसति [2]सुताभिरतिं विहाय शीघ्रम् ।
कतिपयदिवसस्थितिं दुरापां
युवतिजनो युवभिर्वनं विवेश ॥ ५० ॥

अपाचिचीषुरगात् युवभिस्समं
सुरभिपुष्पतरून् सुमनश्चयम् ।
स्तनभरानमितः कृशमध्यमो
विकसिताब्जमुखो वनितागणः ॥ ५१ ॥

पुष्पं लुनाना कमितारमेका
जग्राह भीतेव मधुव्रतालेः ।
अन्या परागः पतितो ममाक्ष्णी-
त्येवं ब्रुवाणा पतिमाससाद ॥ ५२ ॥

---

[1] अ॰ असनं । [2] सुतादिरति ।

कश्चिद्ववन्ध सुमनोरचितावतंसं
पत्न्यास्समं शिरसि नेत्रजलैस्सपत्न्याः ।
उच्चैः प्रसूनमिति सा ह्यवहृत्ततोऽन्या
सावाचिनोष्ट कुसुमं पुलकाञ्चिताङ्गी ॥ ९३ ॥

मृद्वीवदां मृदुपदां स्तबकस्तनाढ्यां
पत्रेक्षणां किसलयाधरशोभमानाम् ।
शाखाभुजामपचिचाय वधूस्सुरूपां
पुष्पन्धयेन रसिकां तनुदीर्घयष्टिम् ॥ ९४ ॥

काचिल्लतागृहगता लतिकासमाङ्गी
स्वन्तर्दधे निजसखीभ्य उदारचेष्टा ।
एनां निजाः प्रकुशला मृगयाम्बभूवुः
सख्यो न वीक्षितुमलं जहसे तयोच्चैः ॥ ९५ ॥

अन्या तरोः कोटरगा निलिल्ये
विहाय तस्मिंस्तमसाऽऽवृते सा ।
तस्माद्विनिर्गन्तुमपारयन्ती
चुक्रोश दीनोद्धरतेति सख्यः ॥ ९६ ॥

कश्चित्परीहासपरोऽप्यधत्त
चक्षुर्द्वयं दोर्युगलेन पत्न्याः ।
पृष्ठे समागम्य वदेति चोक्ता
प्रोचे सुखस्पर्शवशेन नाम ॥ ९७ ॥

उच्चस्थितां कुसुमितामवनम्य दत्तां
शाखां लुलाव कुसुमं दधती धवेन ।
अन्या चुकोप रमणाय च तत्सपत्नी
[1]मात्सर्यमङ्कुरितमाशु ततस्ससाद ॥ ९८ ॥

---

[1] का॰ माकलितमाशु ।

पुष्पं लुनन्त्याः परिमुक्तमन्य
स्तनुकेशपाशं प्रसवैर्बबन्ध ।
तदीक्षमाणा कुपिता सपत्नी
तत्याज पुष्पं त्वरितं ज ाम ॥ ५९ ॥

पुष्पावचायात्परिपेशलानि
स्वभावरक्तानि कराम्बुजानि ।
विशेषरक्तानि बभूवुरासां
प्रायःशरीरं मृदु पुष्पतोऽपि ॥ ६० ॥

नदीषु गङ्गां नगरीषु काशीं
देवेषु शम्भुं ललनासु गौरीम् ।
ग्रहेषु सूर्यं करणेषु चक्षुः
काले वसन्तं जगुरुत्तमं नः ॥ ६१ ॥

शुचिः स्वयं शोकनिदानभूमि-
रन्तर्बहिस्सञ्जनयन् प्रदाहम् ।
तपस्विनामुग्रतपोऽनुकूलं
शुक्रेण साकं शुचिराजगाम ॥ ६२ ॥

कर्माणि जन्मान्तरसञ्चितानि
यथा परीपाकमवाप्नुवन्ति ।
भवान्तरे तद्वदिहोदितानि
फलानि सस्यानि च पाकमीयुः ॥ ६३ ॥

खरांशुस्तीव्रात्मा क्षितिगतरसं वस्तुनिचयं
करैर्निष्पीड्यायं हरति शुचिगो दुस्सहतनुः ।
प्रजानां दुष्टात्मा क्षितिपतिरसावर्थनिचयं
यथाऽऽकृष्यादत्ते करकपटतो लोभवशगः ॥ ६४ ॥

पूरारामः शुष्कवल्लीनिकायो
जातश्शोच्यो निष्कलत्रो गृहीव ।
धन्यो देशो यो नदीमातृकोऽयं
तस्मिन्नासीच्छोच्यभावो जनानाम् ॥ ६५ ॥

आपगास्समभवन्ननापगाः
शोषमाप सरसी शनैश्शनैः ।
दुस्सहज्वरगृहीतमर्त्यवत्
कूपजातमभवच्च पूर्ववत् ॥ ६६ ॥

जीवनन्तु परिलब्धुमनीशो
देवमातृकगतोऽपि सलज्जः ।
आपशायिकमियाय भोजनं
जीवनेऽसुलभ एव हि मानः ॥ ६७ ॥

शान्ते प्रवाहे सलिलानि वाप्या
उद्धर्तुमारप्सत यन्त्रमुख्यैः ।
कैदारिकश्चापि कृषीवलास्ते
विशोषिसस्याय विधूतनिद्राः ॥ ६८ ॥

आपादकामस्तकचन्दनोक्षिता
धारानिकेतेषु वसन्ति भोगिनः ।
लब्ध्वेव वस्त्रं परिधातुमिच्छवो
जनास्तदा शीतलवस्तुसेविनः ॥ ६९ ॥

कालो न दूष्यः स्वयमेव दूष्यतां
पुमानयं पुण्यकृतो महात्मनः ।
सुखाय सर्वं भवतीह विष्टपे
तत्तत्परीहारयुतस्य देहिनः ॥ ७० ॥

विकासि सायंतनमल्लिकानां
धावल्यनि[1]र्भर्त्सितचन्द्रिकानाम् ।
दिग्व्यापिसौरभ्यमुचां समूहै-
र्जिग्ये स्मितं शुभ्रदतो मुरारेः ॥ ७१ ॥

पुष्प्यन्ति वृक्षास्सुरभौ प्रकामं
शुचौ द्रुमाणां विरलं प्रसूनम् ।
तन्न्यूनतां नूनमसौ विहन्तुं
नीपः प्रसूनं सुषुवेऽप्यगन्धम् ॥ ७२ ॥

निदाघकान्तारविहारजश्रमं
नितम्बिनीनां परिहर्तुमुद्यतः ।
गणो ययौ निर्मलनिम्नगातटं
तापस्य शान्तिः प्रथमं हि पाथसा ॥ ७३ ॥

निदाघतप्तोऽपि निसर्गभीरु-
र्जलं प्रवेष्टुं न शशाक भीत्या ।
विश्वासमुत्पादयितुं पुरस्ता-
न्नदीमगाहन्त युवान एव ॥ ७४ ॥

एतावदेव जलमित्यसकृद्ब्रुवाणे
पूर्वावगाढसलिले प्रियबन्धुवर्गे ।
वध्वोऽवतेरुरुदकाशयमप्रगल्भाः
पीनस्तनावनतमध्यमभङ्गशङ्काः ॥ ७५ ॥

पीनस्तनस्तबकिताश्शुचि[2]दन्तपुष्पा
नेत्रच्छदा मुरवफलास्तरुणारुणाङ्ग्यः ।
शोणाधराङ्घ्रिकरपल्लवशोभमाना
वध्वो भृशं शुशुभिरे नववल्लरीवत् ॥ ७६ ॥

---

[1] अ. निर्भासित ।  [2] अ. शुभ ।

अभिययुर्ललनामुखपङ्कजं
मधुकरास्सरसीरुहबुद्धयः ।
सुरभिगन्धि[1] ललोचनपत्रकं
पटुलकण्ठमृणालमनोहरम् ॥ ७७ ॥

अभिपतद्भ्रमरालिविनीतव-
न्निजममूः कमितारमुपाश्रयन् ।
अलमलं चकितेन मृगेक्षणाः
कुरुत मज्जनमित्युपपादिताः ॥ ७८ ॥

नितम्बिनीनां [2]जघनस्थलादिभि-
र्दृढाभिघातात्पृथुलैर्जलाशयः ।
समुत्थितोर्मिः [3]सरसाम्बुपूरः
स तीरभूमिं समपिप्लवत्क्षणात् ॥ ७९ ॥

तदङ्गरागैर्विविधैस्तदम्भ-
स्सतीरपङ्कैः कलुषं बभूव ।
अन्योन्यवक्त्राणि जलैरसिञ्चन्
हस्तैर्न तत्क्लेशमजीगणंस्ताः ॥ ८० ॥

काचित्कमित्रावधृता भुजाभ्यां
ततार जानत्यविजानतीव ।
न चक्षमे तत्किल तत्सपत्नी
भर्तारमैक्षिष्ट रुषाऽरुणाक्षी ॥ ८१ ॥

कश्चित्सिसेच सलिलैर्वदनं प्रियाया-
स्स्नेहे न तत्प्रतिवधूर्विससर्ज बाष्पम् ।
वीक्षाम्बभूव कुटिलेन विलोचनेन
कोपारुणेन च बभूव पराङ्मुखी सा ॥ ८२ ॥

---

[1] अ. विलोचन । [2] अ. स्तनादिभिः ।
[3] अ. स्त्वभिपातयन् मुहुः ।

अन्योन्यसेचनवशान्नयनान्तरस्थं
नीलाञ्जनं विलयमाप [1] च तत्क्षणेन ।
आरुण्यमाप नयनं पुनरेव तासां
वक्त्रे रुचिं [2] न विजहौ पुनरुक्तशोभम् । ८३ ॥

अपनिनीषुरयं वनितागणो
वनविहारपरिश्रममुल्बणम् ।
जलमगाहत तद्धसनादभू-
द्द्विगुणितं श्रमदं बत सुभ्रुवाम् ॥ ८४ ॥

उत्तेरुरुत्तमगुणास्सलिलाशयार्ता
आर्द्राम्बरस्फुटनिबद्धतनूलताकाः ।
उत्थाय सूक्ष्मवसनं वसते स्म कौश्यं
वस्त्राण्यनेनिजुरशोषि च ताभिरद्धा ॥ ८५ ॥

तत्स्थाङ्गरागनिवहैस्सुरभीकृताम्भः
स्पृष्ट्वा ववौ वनमहीरुहमातरिश्वा ।
तेन श्रमो निववृते ववृधे च कामः
पातुं मधुं समामियेष वधूगणः स्वैः ॥ ८६ ॥

युवतयो युवभिस्सममाश्रयन्
मृदुलकुट्टिमसौधमनुत्तमम् ।
मणिमयं मणिसाधितवर्त्मना
कुचभरावनता [3] कृशमध्यमाः ॥ ८७ ॥

सुरभिपुष्पसुवासितकुट्टिमे
क्रमत एव गतास्समुपाविशन् ।
प्रियतमैः पपुरासवमादृता-
श्चषकरत्नवितीर्णममूस्सुरवम् ॥ ८८ ॥

---

[1] अ. ततः क्षणेन । [2] अ. नहि जहौ ।
[3] अ. नमिता ।

उभयमेतदपि स्फुटमीक्षितं
मधु वधूवदनञ्च सुगन्धिमत् ।
मधुगतः किमयं मुख ईक्ष्यते
मुखगतो मधुनीति विशेमहे ॥ ८९ ॥

मधु पिबन् दयितो न तथा पुरा
प्रियतमामुखगेन यथामुना ।
सुखमवाप तथा प्रियवल्लभा
प्रियतमार्पितसीधुरमोदत ॥ ९० ॥

प्रियतमार्पितमासवमेकका
विषममंस्त वधूर्यदयं ददौ ।
प्रियतमा प्रतिपक्षजनाय तत्
कठिनमासु मनो विमृदुस्तनुः ॥ ९१ ॥

चषकरत्ननिविष्टमुखं स्वकं
समभिवीक्ष्य ननन्दुरतीव ताः ।
प्रियतमाभिजयाय मनो दधु-
र्विजयदं वपुरेव हि केवलम् ॥ ९२ ॥

मधुमुखेन मधुर्विकृतिं शनै-
र्जनयति स्म वधूषु सभर्तृषु ।
जहसुरुल्लसितानि हि कारणं
निजगदे [1] बहुधाप्यनुतापदम् ॥ ९३ ॥

श्लथमभूद्वदनं स्खलिता गति-
श्शिशुवचोऽनुचकार वचः स्फुटम् ।
प्रवसनाय मनोऽधित सा त्रपा
भवति या समलङ्करणं स्त्रियः ॥ ९४ ॥

---

[1] का पुनरप्यनु ।

अतिशयेन मधोरिव सेवना-
दवशगः कुरुते नमनादि सः ।
करणजातमभूत्सलयं क्षणं
क्षणविबुद्धमयं महिमा मधोः ॥ ९५ ॥

अशिशिराम्बुभिराननसंस्थितैः
कुचसरोरुहकुड्मलवासिभिः [1] ।
अरुणमिश्रितनेत्रसरोरुहै-
र्वपुरशोभत तद्धरिणीदृशाम् ॥ ९६ ॥

अथ रविश्चरमाद्रिमवातरत्
द्विजगणोऽध्ययनात्समुपारमत्
[2] अघिनगाय्यमवाक्यमनुस्मरं-
स्तदिह मानमुदीरितमव्ययम् ॥ ९७ ॥

मुमुदिरे कुमुदानि विपक्षगो
रविरसावपतज्जलधाविति ।
इति निशम्य वचस्सरसीरुहं
समुकुचद्द्विरहेण रवेरिव ॥ ९८ ॥

नदनदीसरसीगतवारिभी
रविमुदीक्ष्य कराम्बुरुहैर्ददौ ।
सवितृबिम्बनिविष्टमना मनाक्
अनघमर्घ्यमनल्पफलाय सः ॥ ९९ ॥

मनुविसृष्टजलं परमास्त्रकं
भगवतो रथतो बहिरास्थितम् ।
अभिजघान बलं बलिरक्षसां
[3] गणमदो निरगाद्रुधिरं ततः ॥ १०० ॥

---

[1] अ. पातिभिः । [2] अ. अधिगतार्थं ।
[3] अ. गणमथो ।

तत इदं रुधिरारुणमिष्यते[1]
गगनमण्डलमञ्जनसन्निभम् ।
इति वदन्ति जनाः खलु सन्ध्ययो-
[2]-ररुणतात्र मृषास्ति न सा तयोः ॥ १०१ ॥

विरहमाप रथाङ्गसमाह्वय-
स्तत इदं तमसा जगदावृतम् ।
तरुमहीधरकाननभेदनं
न च शशाक विबोद्धुमयं जनः ॥ १०२ ॥

देशान्तरं नृप इवाधिगते दिनेशे
क्रान्तं तमःकुपतिना भुवनाख्यराज्यम् ।
दृष्ट्वोदगादिव रुषारुणबिम्बशाली
चन्द्रस्तदीयसुतवन्निजराज्यमाप्तुम् ॥ १०३ ॥

अपससार तमो नृपचोरवत्
शशिनृपो विरराज महाप्रभुः ।
अपि बभौ सुतरां ककुभामुखं
नृपवधूमुखवन्नृप आगते ॥ १०४ ॥

आनन्दयन्नमृत[3] रश्मिरपारतेजा
राजा रराज भुवनश्रमनुत् सुशीतः ।
स्वस्थोऽधिरूढनिजराज्यपदं सतार-
स्संभावयन्कुमुदबन्धुवनं विनाथम् ॥ १०५ ॥

कश्चिद्युवा युवतिमाह विलोक्य चन्द्रं
दिङ्मण्डलीमुखविकासनसंप्रवृत्तम् ।
वामे निधाय करपल्लवमेतदीय-
स्कन्धे निजं तदुपगूहनहृष्टरोमा ॥ १०६ ॥

---

[1] अ. [ईक्ष्यते]  [2] अ. अरुणतेति ।
[3] का. गोभि ।

वामोरु पश्य मृदुशीतकरः कराग्रैः
आशाङ्गनातनुकुचान्स्पृशति क्रमेण ।
सच्छृङ्गचूचुकयुतांस्तरुकञ्चुकाढ्यान्
मत्तो युवेव चपलस्सकलङ्क इन्दुः ॥ १०७ ॥

क्षीराम्बुधि प्रभवमस्य वदन्ति सन्तो
यत्रोदपादि सकलं बहुमानवस्तु ।
श्रीकौस्तुभः सुरतरुर्धवलो गजेन्द्रः
श्रीमत्सुधा भगवती कमला हरिश्रित् ॥ १०८ ॥

एते पुरा निगदिताः सहजा मृगाक्षि
चन्द्रस्य चन्दनरसादपि शीतलस्य ।
क्षीराम्बुधिर्जननभूः किरणस्सुधाम्ना
मूर्तिस्तथापि मलिना विधिरप्रकम्प्यः ॥ १०९ ॥

वंशद्वयं सुतनु संप्रथितं पृथिव्या
तत्रोदपादि चरमः खलु चन्द्रमस्तः ।
यत्रोदपद्यत नृपाः प्रथितानुभावाः
श्रीकार्तवीर्यभरतप्रमुखा महान्तः ॥ ११० ॥

पुष्णाति तीक्ष्णकिरणात्तरसा निदाघे
सर्वौषधीरनुगतः किरणैस्सुधाभिः ।
रात्रौ दिवातनदिवाकरतप्तजन्तू-
नाप्याययन्नवति सुभ्रु सुधांशुरेषः ॥ १११ ॥

रात्रौ वराङ्गि युवभिर्घटने वधूनां
पुष्पायुधस्य शिशिरांशुरमात्य एषः ।
धत्ते मधुर्गदितकार्यविधावमात्यौ
द्वावित्थमस्य गदितौ परमौ सहायौ ॥ ११२ ॥

नास्यास्ति किञ्चिदपि लक्ष्म कलङ्कभावं
चन्द्रे कलङ्करहिते जनतेयमाह ।
आरोप्य भूगतमिदं प्रतिबिम्बमात्रं
चन्द्रः कलङ्कित इति प्रतिबुद्धिरेषा ॥ ११३ ॥

अस्यापि हन्त भविता व्यसनं दुरन्तं
वर्षासु मेघमलिनीकृतदिक्षु भद्रे ।
एतावदेव कथयन् युवतिर्द्वितीयः
स्वं मन्दिरं प्रति जगाम विलोक्य काष्ठाम् ॥ ११४ ॥

अवसरमभिवीक्ष्य पुष्पधन्वा
युवतिजनेषु शरं मुमोच विद्वान् ।
मधुरसवशगेषु [1]निर्दयात्मा
निजसमये विहितः फलाय योगः ॥ ११५ ॥

युवजनेऽपि तथाविधचेष्टिते
मनसिजो न्यधितास्त्रपदं पुनः ।
मृदुमनाः पुरुषस्तदपेक्षया
मृदुषु मार्दवमेव विधीयते ॥ ११६ ॥

यथा हुताशो ज्वलितुं व्यपेक्षते
काष्ठं तदन्यज्ज्वलनश्च साधनम् ।
तयोश्च योगो घटकव्यपेक्षण-
स्तथा युवादिर्घटकं व्यपेक्षते ॥ ११७ ॥

कश्चिद्युवा मकरकेतनशासनस्थ-
स्संप्राहिणोदसुसमानयनाय दूतीम् ।
तत्तद्विधेयकरणेषु पटिष्ठबुद्धिं
सामादिभिस्त्वमनुनीय समानयेति ॥ ११८ ॥

---

[1] अ. निर्भयात्मा ।

बाले किमेव मनुषे किमु कार्यमस्ति
गन्तव्यमद्य[1] भवनं किमु वेत्सि भद्रे ।
जानाति हार्दमपि सन्तनुते त्वदीशो
जानासि तद्धृदयमालि विकत्थनं मा ॥ ११९ ॥

ज्ञानेन वा कृतमनेन न जानता वा
तद्यातु [2]नैर्ष्यमुपरीश्वरि पश्य वृत्तम् ।
सूक्ष्मापराधपरिहारविधिस्त्वशक्यः
केनापि तेन सुखमास्स्व पतिं जुषस्व ॥ १२० ॥

सत्यं वदामि सुभगे सकलाधिपत्यं
त्वय्यर्पयिष्यति यदुक्तमदो विधाता ।
त्वय्येव तस्य हृदयं न हि वेत्सि बाले
तत्त्वेन हार्दमपरत्र तु गौणमस्य ॥ १२१ ॥

वक्ष्यामि गोप्यमपरं तव सुभ्रु भर्ता
जायां करिष्यति युवा कमनीयरूपाम् ।
कार्यं न चातिमथनं क्वचिदप्यकाले
जानासि मूढहृदये पतिता [3]पयोधौ ॥ १२२ ॥

यदुक्तमद्य न करिष्यति मूढभावा-
त्तन्मन्दिरं सुतनु नास्ति वदामि सत्यम् ।
गच्छामि गेहमभिवाञ्छसि चेत्प्रयाहि
नो चेन्मदुक्तमखिलं स्मरसि त्वमेव ॥ १२३ ॥

---

[1] अ. आर्य । [2] का. नेक्ष्य ।
[3] का. पदव्यौ ।

इत्येवमादिवचनैरनुनीय दूती
तां नायिकां पतिसमीपमथानिनाय ।
काश्चिद्युवा स्वदयितां प्रणतः पदाभ्यां
संताडितोऽपि चरणौ न मुमोच दीनः ॥ १२४ ॥

काचित्कृतागसमनाडयदुत्तमाङ्गे
लीलागृहीतकमलेन निजासुनाथम् ।
मत्तो गजेन्द्र इति कश्चन कांचिदुक्त्वा
काञ्चीगुणेन रुषिता भृशमाबबन्ध ॥ १२५ ॥

दूतीवचोभि[1] रुचितैर्मधुनोदितेन
संवर्धितो मकरकेतुरवाप्तशक्तिः ।
चक्रे मदेन च वशं युवतीस्तकान्ता-
स्सद्यो जहुः प्रणयकोपमशेषमेव ॥ १२६ ॥

अन्योन्यसन्दर्शितजातहृच्छया-
स्संभाषणादीनि मिथो वितेनिरे ।
विरोधवार्ता न च शुश्रुवे तदा
स्नेहातिरेकाद्रनिमापुरुत्तमा ॥ १२७ ॥

सुरतसम्भ्रमतो गलितं न ताः
करगलादिगतं वरभूषणम् ।
अविदुरुद्धतमन्मथमोहिताः
किमिव कारयितुं मदनोऽनलम् ॥ १२८ ॥

---

[1] अ. रुदितैः ।

मदनमोहमहागहनाटवी
गतवतो मदिरालसचेतसः ।
मदनचोरहृतं वसनादिकं
युवतिपान्थजनस्य सुदुर्नयैः ॥ १२९ ॥

तीव्रव्याधिनिरोधनाय भिषजां दृष्ट्यै विदेशभ्रमः
शिष्याणामुदयो रवेर्जलनिधिस्सह्यादिना वर्णितः ।
वासन्तश्शुचिना समं वनजलक्रीडादि यस्मिंस्तुतं
सर्गोऽयं दशमोऽत्र शङ्करजये व्यासाचलीये गतः
॥ १३० ॥

॥ इति श्रीशङ्करविजये व्यासाचलीये
दशमस्सर्गः ॥

---

## ॥ अथ एकादशस्सर्गः ॥

आविर्बभूव परिलम्बिपयोधराढ्या
भेकात्मजस्वनितदूषितदिग्विदिक्च ।
[1] श्रीकालिमाश्रितपटा परिलुप्तवर्त्मा
प्रावृड्वधूस्तदभिनन्दितसर्वलोका ॥ १ ॥

मेघा जगर्जुरुररीकृतभीमचापा
विद्युत्कृपाण[2]लसिता गगनादिमध्ये ।
उल्लासिनीलिमतनुश्रितसर्वगात्राः
शूरा इवोष्णरिपुमाशु निहन्तुकामाः ॥ २ ॥

यस्मिन्परं परहिताभिरतप्रकाशे
चन्द्रादिके श्रुतिपथं न गतैव वार्ता ।
तस्मिंस्तिरोहितवति प्रथितेऽत्र तेषां
खद्योतनाम भजतामभवत्प्रचारः ॥ ३ ॥

दृष्ट्वातिदुष्टसुसमृद्धविपक्षजातं
हंसा ययुः [3]स्थितिमनक्षरमानसीं ते ।
युक्तं हि दुष्टपरिवर्जनमुत्तमानां
भायात्तमस्थमपि वस्तु तमोवदेव ॥ ४ ॥

चन्द्रादिके परहिताभिरते प्रयाते
खद्योतका विलसितुं परमारभन्त ।
धर्मानुयायिनि नृपे परलोकयाते
प्रत्यन्तवासनिरता इव मण्डलेशाः ॥ ५ ॥

---

[1] अ. कालिका सितपटा । [2] अ. लतिका ।
[3] का. सरसिकामथ मानसीं ते ।

जीमूतधर्मिगृहदत्तमुपाददाना-
स्ते चातकद्विजवरास्ततृपुर्नवाम्भः ।
एषा न तृप्तिरितरस्य जनस्य जातु
सच्छ्रोत्रियस्य कुनृपात्तधनस्य यद्वत् ॥ ६ ॥

आकर्णयंस्स्तनितमूर्ध्वमुखो घनानां
केकी ननर्त कुशली शिखिनीसमेतः ।
देव्याश्शिवः परिसरे प्रसृतोरुबाहु-
स्सङ्गीयमान इव नृत्यति मोदमानः ॥ ७ ॥

मेघोपरोधवशतो रविमाप दीप्ती
रात्रौ तथा हिमकरं नववारिसिक्ता ।
तावत्प्रकाशपदवीमुपयातवन्तौ
दृष्ट्वा शुचेव पृथिवी विससर्ज बाष्पम् ॥ ८ ॥

लोको विषण्णवदनो विरहातुरो यो
दृष्टेर्निपातमपि न क्षमते क्षपायाम् ।
व्याकोशकन्दलतया गगनेऽभ्रयोगा-
द्दिक्षु प्रणार्तिनमयूरतया विशेषात् ॥ ९ ॥

भञ्जंस्तरुं बधिरयञ्जनमुच्चशब्दा-
त्कुर्वंस्तनून्विदलयन् शिशिरोऽतिमात्रम् ।
वायुर्ववौ द्रुतगतिर्न शशाक कश्चि-
च्छत्रं विधारयितुमुद्धतवायुवेगात् ॥ १० ॥

धन्यो जनो गृहगतो न चचाल भोगी
तस्मादृशा दहनमुज्वलमीक्षमाणः ।
तल्पेऽशयिष्ट वनितासहितस्सुखेन
किं नाम दुस्सहमनिष्टदमिष्टभाजाम् ॥ ११ ॥

वर्षासु वारितगतासु सुदुस्सहासु
शोचन्नशेत विरही विरहीव वित्तैः ।
पुण्यस्सुखी घटितवाञ्छितसाधनत्वा-
द्दुःखी च तद्विदितरोऽकृतपुण्यभावात् ॥ १२ ॥

धारां व्यमुञ्चत घनो [1]बहुमृण्मयीं तां
या दुर्दिनं व्यधित वारितसूर्यरश्मिः ।
सूर्यव्रतास्त्रिचतुराणि दिनान्युपोषु
र्नाज्ञायि यत्र च नदीवसुधाविभागः ॥ १३ ॥

नद्यस्तदा बहुजला बहुधाप्रवाहाः
क्षेत्राणि संविविशुरुत्तमसस्यभांजि ।
सस्यव्ययाद्विरुरुदुः कृषिकाः कृशाशाः
केचिच्छशंसुरपि शेपुरनल्पवृष्टिम् ॥ १४ ॥

गेहेष्वनावृतचरेषु जलावसेका-
त्कुड्यानि पेतुरतियत्नविनिर्मितानि ।
क्षेत्रावनाय विहिता दृढसेतवश्च
भिन्ना नदीपरिसरे बहुवित्तकार्याः ॥ १५ ॥

वापाय नीतमपि बीजचयं गृहाणि
निन्युर्जलाधिकतया परिवाप्य भूमेः ।
शीताम्बुसिक्तवपुषो व्यसृजन्महोक्षान्
गन्तुं न शक्नुवत उच्छ्रितशृङ्गभाजः ॥ १६ ॥

श्रीगोकुलं वनभुवि प्रचरद्यथेष्टं
हित्वा वनं गृहमियाय विनम्य वक्त्रम् ।
वर्षानिलेन मृदितं क्षुभितं स्ववत्सैः
हुङ्कारगर्भवचनं व्यसृजत्कृशाङ्गम् ॥ १७ ॥

[1] का. बहुलामयां

धन्यो लुलायमहिषीगण एत्य सम्यक्
संसेव्य वृष्टिमदिरां मुमुदे मदान्धम्
व्यस्मारि गेहमटता बहुशष्पकक्षं
तस्माद्वनान्तरमियाय निषेवमाणः ॥ १८ ॥

सन्मार्गवत्कलियुगे पथिभिः प्रणेशे
दुष्टैः खलैरिव तृणैर्वितते सरिद्भिः ।
हंसेषु मानसगतेषु बकौघमाला
मोदं जगाम सुजनै रहितः खलो वा ॥ १९ ॥

[1] दीर्घाङ्घ्रिकप्रणयिपीलकवल्लरी सा
गर्भं दधार कुसुमं फलसूनुहेतुम् ।
या सूयते फलतनूजमविघ्नभावे
मासे सहस्यविदिते प्रथितात्मशक्तिः ॥ २० ॥

फुल्लारविन्दनयना विमलाम्बराढ्या
मेघावरोधनवरग्रहणाद्विमुक्ता ।
श्रीरामसूर्यपरिशोषितदुःखपङ्का
सीतेव सा शरदियं ददृशे मनुष्यैः ॥ २१ ॥

काशैः क्षितिर्धवलदीप्तिभिरुच्चकाशे
सच्चामरैरिव दशाकरिणी तथैव ।
मेघैर्विमुक्तममलं गगनञ्च शुभ्रै
स्तारागणैरधरितोज्वलमौक्ति[2]कौघैः ॥ २२ ॥

अम्भोभिरुज्झितमलैर्मुनिमानमानां
धिक्कार[?]र्नदनदीसरसीतटा[?] ।
संरजिरे विकचवारिरुहैस्समन्तात्
सौरभ्यलुब्धबहुगायिमधुव्रतश्रैः ॥ २३

[1] क. दीर्घाङ्घ्रिप [2] का काभैः ।

हंसद्विजा लघुमदाः शरदोपहूता
आजग्मुरुद्धतविलोकनवाञ्छयेव ।
श्रीमानसात्सकलकालसमृद्धिभाज-
स्संधूयमानसितपत्रपटास्सुशीलाः ॥ २४ ॥

दिङ्मण्डली नगकुचा सरसीरुहाक्षी
वप्राधरा द्युवसना सिततारदन्ता ।
प्रोत्तुङ्गशारिवि[illegible]रपाण्डरहारयष्टि-
स्संराजते बहुगुणा शरदा विभक्ता ॥ २५ ॥

कादम्बिनीयवनिकामपसारयन्ती
नानापदार्थनिकरं रविचन्द्रमोभ्याम् ।
आभासयत् गृहगता गृहिणीव तत्स्थं
नानापदार्थनिकरं करदीपिकाभ्याम् ॥ २६ ॥

अम्भांसि कुम्भजननो मुनिरात्मपादै-
स्संशोधयन्नुदयते स्म महानुभावः ।
स्रोतस्विनीषु पुलिनानि महान्ति हातुं
प्रक्रान्तवन्ति शनकैरुदकोज्झितानि ॥ २७ ॥

अम्भोधितीरनगरेषु निचिक्षिपुः स्वं
पोतेषु भाण्डमपरत्र च दुर्लभं यत् ।
सयात्रिका बहुधना धनवृद्धिकामा
यैराप्यते शतगुणं धनमक्षयञ्चत् ॥ २८ ॥

उच्छ्रायिकूलतरवः पवनेन नुन्ना
पोता ययुर्निहितभाण्डचयास्समुद्रे ।
द्वीपान्तरं प्रति विचक्षणरक्षितव्याः
केचित्समाययुरमी परिपूरितार्थाः ॥ २९ ॥

अश्वा गजास्समवतेरुरमीभ्य उच्चै-
र्यत्नाद्विचक्षणजनैरवतार्यमाणाः ।
दीर्घोन्नताः क्षितितले बहुधाप्युपायैः
लोकस्समायदथ[1] लोकयितुं विनोदम् ॥ ३० ॥

केचिद्विलोक्य हरित[2]स्सहसा प्रसन्ना
हत्वा नदीगयुरपूर्वमुपाददानाः ।
विक्रेतुमक्षतादिको वणिजो विदेशात्
क्रेतुं कुरङ्गमदपूर्वमपूर्ववस्तु ॥ ३१ ॥

आपूर्णशालिनिचया बहुमाषगर्भा
मुद्गान्तरा बहुविधाम्बरभारभाजः ।
गोण्यो बलोपहितभद्रमृगाधिपानां
आजग्मुरुच्छ्रितविषाणगचामराणाम् ॥ ३२ ॥

दीर्घद्विखण्डकलिता पृथु[3]पृष्ठलग्नां
पश्चाद्द्वयीं बलगतां दधतां निकायाः ।
कण्ठावलम्बिबहुनादिसुघण्टिकानां
सर्वाङ्गपाण्डरिमयोगविराजितानाम् ॥ ३३ ॥

आगत्य दूरवणिजो बहिरेव पुर्या
वासाय वेश्म वसतैर्व्यधुरत्युदारम् ।
आत्मीयगेह इव साधितसर्वसाध्या
अध्युष्य तद्विदधिरे क्रयविक्रयाद्यम् ॥ ३४ ॥

काश्चित्समानयदथात्मगृहं विदेशात्
काश्चिद्विदेशमनयद्गृहतोऽर्थमर्थी ।
कश्चिद्धनं विभजते स्म समानमन्यै
कश्चिद्धनी गणयति स्म गणेयमर्थम् ॥ ३५ ॥

---

[1] अ. दवलोकयितुं ।
[2] का. शरदि ।
[3] अ. पूर्वलग्ना पार्श्वद्वयी ।

अभ्रंलिहानि नगरेषु धनाधिनाथाः
सौधानि सेव्यसुखदानि वधूसहायाः ।
अन्तर्गृहाद्द्रुतमुपारुरुहुस्समन्तात्
द्रष्टुं विभूतिमनघां शरदोपनीताम् ॥ ३६ ॥

राजापि दुर्गनिलयान् द्विषतो विजेतुं
कालं निरीक्ष्य समनीनयदात्मसेनाम् ।
दन्तीन्द्रसैन्धवपदातिरथोपपन्नां
ते दुर्गमात्मनिलय दृढमाबबन्धुः ॥ ३७ ॥

पक्वानि पिङ्गकपिशानि नतानि भूमौ
सस्यानि तेषु पतति स्म शुकालिरुत्का ।
हर्तुं प्रसह्य कणिशं न शशाक गोपी
संरक्षितुं कथमलं [1]बलिनोऽबला सा ॥ ३८ ॥

पूर्वां दिशं गतवती यदि गोपिकेयं
ते पश्चिमां दिशमयन्ति पलायमानाः ।
सा पश्चिमां गतवती यदि पूर्वदिका-
मित्थं तताम शुकसङ्घनिकालनोत्का ॥ ३९ ॥

श्यामच्छदान्मृदुपदान्मृदुभाषमाणान्
चञ्चुप्रदिष्टकणिशान् चटुलायताक्षान् ।
तादृक्शुकीरनुगतान् पृथुशोणतुण्डान्
को वा निकालयितुमीश्वर ईदृशस्तान् ॥ ४० ॥

सस्यावने कृतनिरन्तरयत्नवत्यै
तस्यै चुकोप शुकभक्षितमुण्डशालीन् ।
दृष्ट्वाधिपो युगपदुद्धृतपक्वशालीन्
नैवाक्षमिष्ट लवितुं परवान्निकृष्टः ॥ ४१ ॥

---

[1] अ. चलिनो ।

दृष्ट्वा भयानकमुखं पृथुवक्त्रघोणं
वेशन्तपङ्कपरिलिप्तसमस्तगात्रम् ।
घोरोच्चशब्दपरिभीषितलोकमुग्रं
भूदारयूथमविशन्निशि पक्वशालीन् ॥ ४२ ॥

कैदार्यमाद च जगर्ज च भीमनादं
पादाभिघातपरिचूर्णितमञ्जरीकम ।
नाबुद्ध गोपकुलमुग्र[1] महान्धकारे
निद्राभिभूतमुदयावधि घर्मरश्मेः ॥ ४३ ॥

उत्थाय गोपककुलं परिनष्टसस्यं
तुन्दं जघान च विलोक्य विहाय पत्युः ।
तच्चापरत्र दिवसे न चकार निद्रां
[2]उत्कालयन्किल कुलं परिवात्प्रजाहः ? ॥ ४४ ॥

दीपालिकोत्सवमभूत्प्रथितं नगर्यां
सर्वं तदर्थमुपयुङ्क्ष च मोदमानः ।
जग्राह नूत्नवसनं मलिनं न्यधावी-
दामुक्तनाभरणवृन्दमनल्पशोभम् ॥ ४५ ॥

रथ्याप्रङ्गणाणगृहाणि ममार्ज यत्नात्
तोयैरसिक्त परिमण्डयति स्म भक्त्या ।
द्वारेषु पूर्णकलशानपि पूगवृक्षान्
पुष्पैर्युतान् कदलिकास्सफला न्यधाच्च ॥ ४६ ॥

सेवानुरूपमददाद्वसनार्थजातं
भृत्यादिकाय धनिकः स्वयमप्यवस्त ।
वस्त्रं नवं बहुधनं परिनिर्दिष्टागः
कर्पूरचन्दनरसादिकृताङ्गरागः ॥ ४७ ॥

[1] अ. तरे ।    [2] अ. मुक्त्वाऽऽलपत्करिकुलं परियाद्द आगः (?) ।

केचिज्जहुर्नवनिषेवणमात्तवित्ता
अन्ये महीपनिमुगासिषगेरुकवीर्याः ।
जग्मुर्विदेशमपरे नृपसेवनाय
केचिद्गटास्तत उपाययुरन्यहेतो ॥ ४८ ॥

तस्मिन्महे महति भूषितसर्वगात्राः
...नूरिकामक...ग. ।
राजा तदीयलङ्काः पुरुषा निशाम्भो
नालीमुखेन सिसिचुर्भृशमाननादौ ॥ ४९ ॥

राज्ञी नृपं नृपनिरात्मवधूममात्यान
ते चैनमेवमपरे सिषिचू रसार्द्रा ।
आर्द्राङ्गवस्त्रचिकुरा विहिताट्टहासा
रसंरेजिरे प्रथमका इव धातुरक्ताः ॥ ५० ॥

राज्ञां विजेतुमनसां प्रथमोऽभ्युपायो
भोगास्पदं विभविनां घृतपङ्कदोषा ।
आपक्वसस्यविभवा विशदांबुहृद्या
दीपालिका विजयते गुणपूररम्या ॥ ५१ ॥

श्रुत्वेति सर्वगुणयुक्तशतां मृगाक्षीं
हेमन्तनाम ऋतुराज उपाजगाम ।
उद्बोढु म इव लालितघर्मरश्मिः
सर्वो गुणी गुणिगतिः प्रथितो हि लोके ॥ ५२ ॥

उत्पादयन्पनसचूतमुखाङ्घ्रिपाणां
गर्भं ववौ सहसितश्वसनस्सुतीव्रम् ।
यस्माद्भवन्ति पनसेषु शिवाकृतीनि
सूक्ष्माणि वृन्दसहितानि फलानि सद्यः ॥ ५३ ॥

भूमीरनूपनिलया उदयुञ्जतादौ
क्रष्टुं कृषीवलजनास्सहसा सहासाः ।
पान्थाः प्रमन्दहसितास्सहसा बभूवु-
र्वातेन चापि सहसाऽभिगतेन विद्धाः ॥ ५४ ॥

शोकास्पदं सकमलं कमलं व्यनाङ्क्षीत्
हेमन्तकालखलसङ्गतिदूषितं तत् ।
शोच्यास्तदा सरसिजैर्बिरहात्सरस्यो
जाताः परं कुलवधूरिव निस्तनूजा ॥ ५५ ॥

मध्येऽपि वासरपतिर्दिवसस्य तीक्ष्णो
मन्दो बभूव शिशिराम्बुकणाभिवर्षी ।
शीतोऽप्यशीतवपुरुष्णमनुष्णमास्त
किं नाम कर्तुमनलं बत काल एषः ॥ ५६ ॥

नखंपचोत्तुङ्गपयोधराढ्य-
प्रियोपगूढास्सहसा युवानः ।
ताम्बूलवल्लीदलपूगखण्ड-
कर्पूरसंपूरितवक्त्रपद्माः ॥ ५७ ॥

सुदुस्सहं [1]शीतमनन्यभार्यं
[2]प्रसेविरे सेवितकोष्णभक्ताः ।
निदानविद्वैद्यवरोपादिष्ट-
योगेन रुग्णा इव रोगमुग्रम् ॥ ५८ ॥

निवातगेहं सुदृढोरुभित्ति
[3]बद्धादरं कोष्णनिषेव्यमाणम् ।
सरल्लकं तल्पमनल्पशीतलं
संसेव्यमानशिशाथिलीचकार ॥ ५९ ॥

---

[1] अ. अनन्यहार्यं । [2] अ. प्रसेहिरे ।
[3] अ. बद्धाररं ।

निःस्वस्सुजीर्णवसनस्सदनेऽ[1] म्बुजीर्णे
शीतोत्तरेऽग्निरहिते गतनिद्र आस्त ।
काष्ठोज्झिते दलितजीर्णकवाटचेले
सङ्कोचयन् करपदानि विस्तारयंश्च ॥ ६० ॥

आनम्रपक्वफलपुञ्जककृष्णवस्त्र्य-
श्शीताद्भियेव ललनावरचेतयन्स्य ।
आमूलमाग्रपरिरम्भणलब्धसौख्या-
स्सेवन्त औषरवनेषु तरूनुपघ्नान् ॥ ६१ ॥

आलिङ्गिताः कृष्णलताभिरुच्छ्रिता
गुञ्जा नताभिर्बहुभारसंश्रयाः ।
शिरोभिरीड्यां जननीं वसुन्धरां
नूनं प्रणन्तुं विनमन्ति शाखिनः ॥ ६२ ॥

भानुर्दिवा कठिनकोष्ठभवः कृशानु-
स्सन्ध्याद्वये तुहिनरोगनिपीडितस्य ।
जानुद्वयं निशि मुखेन निचुम्ब्यमानं
भैषज्यमुक्तमति[2] दुर्विधपूरुषस्य ॥ ६३ ॥

शेतेऽसकृत्तुहिनपीडित उत्थितश्च
वैश्वानरं निशि विकीर्य निषेवमाणः ।
रात्रेः कियत्त्वमिति पृच्छति दुर्विधेयं
शेते विषण्णवदनो गतनिद्र एव ॥ ६४ ॥

हेमन्तपीडितमुदीक्ष्य जनं समन्ता-
दभ्यागतश्शिशिरकाल उपात्तदेहः ।
[3] घर्मावसान उपरोधकपूर्वभाग-
स्सर्वो निपीडितनिपीडनकाम एव ॥ ६५ ॥

---

[1] अ. सुजीर्णे । [2] अ. दुःखित ।
[3] अ. शर्मावसान ।

[1]संसेचिरे कोलकवल्लरी[2] तां
फलानि कृष्णान्यपि शोणभावम् ।
प्रपेदिरे तानि च पक्षिसङ्घो
जघास हृष्टाधिपतिश्शुशोच ॥ ६६ ॥

आरभ्यमाणाः पुरुषैर्महीरुहो
मृदुस्वभावाश्शिरसा महीतलम् ।
नमन्ति भग्नं न च यन्ति सज्जना
यथा मनाक् कृष्णलतासमाश्रयाः ॥ ६७ ॥

पक्वानि कृष्णानि समं प्रसुस्रुवु-
स्समं विपाकालविता न लभ्यते ।
अलावयन् शीघ्रमनल्पसेवका
लुनन्ति केचित्स्वयमेव लोभिनः ॥ ६८ ॥

कठोरभावात्पुरुषाधिरूढाः
पतन्ति भग्ना अपि पातयन्ति ।
महीरुहा दुर्जनवत्पुमांसं
कृष्णाचिता नम्रलतोपगूढाः ॥ ६९ ॥

अशूशुष[3]न्नूक्षणमुन्नतस्थले
बह्वातपे त्रीणि दिनानि सत्खले ।
न्यधुः कुसूले मरिचं गृहान्तरे
विक्रेतुकामा धनिनो धनार्थिनः ॥ ७० ॥

विचिक्रियुः केचन शोषयित्वा
प्रयाति मूल्येऽल्पधनाधमर्णाः ।
शीतार्दितानामभवद्धिताय
श्रीकृष्णगेहो बहुलोष्णदायी ॥ ७१ ॥

---

1 अ. संपेचिरे ।
2 अ. वल्लरीणां ।
3 अ. न्नूषण ।

श्रद्धालवस्तपसि शीतमनीक्षमाणाः
सस्नुर्नदीष्वयसि पुण्यमवाप्तकामाः ।
शारीरलोमानि करे परि [1] दृश्यमाने
पूर्वाचले तपनमण्डलमण्डिताङ्गे ॥ ७२ ॥

सहस्ररश्मावुदितेऽपि केचि-
न्न [2] चात्यजन् शीतभयेन शय्याम् ।
पुराभवे सञ्चितपुण्यलेशा
निचोलिनो भोग्यवधूपगूढाः ॥ ७३ ॥

[3] कुल्योपकूलागतवारिपीतै-
र्निराकृताशेषतृणान्तरालैः ।
योधैरिवाङ्गीकृतपंक्तिभावैः
पूगै रराजोपवनं तपस्ये ॥ ७४ ॥

सद्दाळवालोदरनिर्गतासित-
च्छदालिताम्बूललताभिवेष्टितैः ।
ली [4] लापचायाल्लघुभिस्समोन्नतै-
स्सबालकैः श्यामलदीर्घपत्रकैः ॥ ७५ ॥

आमूलकाग्रफलितैः पनसैरुपेतं
सीमाधिरोपितसदाफलनालिकेरम् ।
रम्भाभि [5] रुत्तमफलानतपुञ्जभाग्भिः
विस्तीर्णपत्रनिचयाभिरनिन्दिताभिः ॥ ७६ ॥

सोपानसंस्थं बहुदन्त [6] शारं
सदा प्रवाहो [7] द्वदसत्तटाकम् ।
क्वचित्समानीतनदीकबन्धं
क्वचित्सुयन्त्रोद्धृतवारिपुष्टम् ॥ ७७ ॥

---

[1] अ. हृष्यमाणे ।
[2] अ. तत्यजुः ।
[3] अ. कुल्योपकुल्यागतवारिपीतैः ।
[4] अ. फलावचायात् ।
[5] अ. उन्नत ।
[6] अ. शार्ढ ।
[7] अ. ऊर्ध्वग ।

एवं क्रमादार्तवमीक्षमाण-
स्सोऽन्वेषमाणो यतिनां निकायः ।
समानयद्देशिकवर्यपार्श्वे
भिषग्वरान् शास्त्रचणान् प्रवीणान् ॥ ७८ ॥

मुनिवरस्समुपाचरदागतान्
गृहिवरैर्धनधान्य [1] पुराणकैः ।
मुमुदिरे कृतसत्करणादमी
गदनिदानविदो भिषजां वराः ॥ ७९ ॥

बहुदिनैर्बहुदेशसमागतान्
सबहुमानमिदं मुनिरब्रवीत् ।
कुशलता भवतामपि वर्तते
गृहकलत्रसुतादिषु संप्रति ॥ ८० ॥

विशदवारि मृदूलपसंयुतं
भवति काननमन्तिकभूगतम् ।
अपि पशव्यमपोढदवानलं
सरसपल्लव [2] वल्गुलतावृतम् ॥ ८१ ॥

सुखदवं वनगोगणमक्षयं
किमु तरक्षुगणश्च न बाधते ।
अभिमतं बहुबाधमुदीक्ष्यते
न हि विनष्टिरनीहित [3] वस्तुनि ॥ ८२ ॥

हरिहयोऽभिमते समयेऽधुना
नदह्रदे वसुधामपि वर्षति ।
अपि फलन्ति नगा उपजीव्यता-
मुपगता बहुतापभृतोऽनिशम् ॥ ८३ ॥

---

[1] अ. वरांशुकैः ।
[2] अ. गुल्म ।
[3] अ. प्सित ।

अपि मनो भवतां नृपसेविनां
तदनुसारि दिवानिशमज्वरम् ।
दहनवन्नृपतिं परिषेवितुं
शिथिलबुद्धिभिरङ्ग न शक्यते ॥ ८४ ॥

[1] अपि भवद्विषये न भयं क्वचि-
द्विषमदुर्गमदुर्गसमाश्रयात् ।
खलपतेः कुलभूपम[2] नीषितुः
परधनेन हृतेन सदाश्रतः ॥ ८५ ॥

नरपतेरपि शासनमार्दवा-
ज्जनपदो न च वो बहुतस्करः ।
कथितशास्त्रविदो बहु मन्वते
नृपतयो गुणदोषविचक्षणाः ॥ ८६ ॥

सततमार्थितमेव हि भेषजं
तदपि सञ्चितमस्ति भवद्गृहे ।
न हि विदन्ति जनाः परसङ्कटं
स्वहितमर्थयितुं प्रभवो हि ते ॥ ८७ ॥

अतिथिरत्तुमना गृहमागतो
हतमनाः क्रियते हि न गेहिभिः ।
स हि [3] समीक्षत एव भवादृशै-
स्त्रिदशलोकगतौ दृढसंक्रमः ॥ ८८ ॥

अपि मखः क्रियते बहुदक्षिणो
द्विजवरैर्बहुयाजकसाधकः ।
[4] बहुफलो बहुभक्तसुतृप्तिदो
बहुदिनश्रुतिघोषसमन्वितः ॥ ८९ ॥

---

[1] अ. अयि । [2] अ. अनीक्षितुः ।
[3] अ. समीरित । [4] का. शुभफलः ।

नदनदीगिरिदेशविलंघना-
त्समभवद्भवतां पथिजः श्रमः ।
दिनकरस्य करै[1]रपि तापदैः
परहिताभिरतस्य न दुःखधीः ॥ ९० ॥

इति निशम्य वचो मुनिनोदितं
निजगदे गदहारिजनैस्ततः ।
भवदनु[2]ग्रहणात्कुशलं च नो
गृहकलत्रसुतादिषु सन्ततम् ॥ ९१ ॥

कुशलमेव समस्ति न सङ्कटं
न हि रवौ तिमिरं लभते स्थितिम् ।
अगमदध्वजभूरिपरिश्रम-
स्तव मुखाब्जविलोकनतोऽधुना ॥ ९२ ॥

यदिह नः करणीयमुदीर्यतां
वितनुमो मुनिवर्य यथाबलम् ।
उपगुदं भिषजः परिबाधते
गद उदेत्य तनुं ननुमध्यगः ॥ ९३ ॥

यदिदमस्य विधेयमिदं ध्रुवं
गदत रोगतमस्तिमिरारयः ।
चिरमुपेक्षितवानहमेतकं
दुरितजोऽयमिति प्रतिभाति मे ॥ ९४ ॥

तदपि शिष्यगणैर्नि[3]रहंस्यहं
प्रहितवान्भवदानयनाय तान् ।
निगदिते मुनिनेति भिषग्वरा
विदधिरे बहुधा गदसत्क्रियाः ॥ ९५ ॥

---

[1] अ. अति ।
[2] अ. स्मरणात् ।
[3] का. निरबन्ध्यहं ।

न च शशाम गदो बहुतापदो
विमनसः पटवो भिषजोऽभवन् ।
जनपदानतिलङ्घ्य समागता
वयमितो न कृतं हितमस्य हा ॥ ९६ ॥

न दहनं विरहय्य मुने गदं
शमयितुं प्रभवन्ति भिष[1]ग्जनाः ।
अनुचिता यतिनां दहनक्रिये-
[2]त्यपथभीति मनो वदितुं च नः ॥ ९७ ॥

अटत गेहमगात्समयो बहु-
र्गदहृतां भवतामितरं युषाम् ।
दिनचयं गणयन्पथिलोचनः
प्रियजनो निवसद्विरहातुरः ॥ ९८ ॥

नरपतिर्भवतां शरणं ध्रुवं
स च विदेशगमं श्रुतवान्यदि ।
रुषितवान् न च वो वितरेन्नृपो
भणितजीवितमक्षतशासनः ॥ ९९ ॥

तुरगवन्नृपतिश्चलमानसो
भिषजमन्यमसौ विदधीत वा ।
नरपतेर्हृदयाम्बुजतोषणं
न सुकरं सुधियापि [3]निशेशवत् ॥ १०० ॥

जनपदो विरलो गदहारकै-
र्बहुलरुग्णजनः प्रकृतेरतः ।
मृगयते भवतो भवतां गृहे
[4]गदिजनस्सहितुं गदमक्षमः ॥ १०१ ॥

[1] का. भिषग्वराः ।
[2] का. अपि समीति ।
[3] अ. विशेषवत् ।
[4] अ. गृहिजनः ।

पितृकृता जनिरस्य शरीरिण-
स्तदवनं गदहारिषु तिष्ठति ।
जनितमप्यफलं भिषजं विना
भिषगसौ हरिरेव तनूभृतः ॥ १०२ ॥

यदुदितं भवता वितथं न तत्
तदपि न क्षमते व्रजितुं मनः ।
सुरभुवं प्रविहाय मनुष्यकं
व्रजितुमिच्छति कोऽत्र नरस्सुधीः ॥ १०३ ॥

इति निगद्य गते भिषजां गणे
विमनसि प्रथिते गदपीडितः ।
हृदयगौ विदधे मुनिरश्विनौ
हरिहयस्य गृहे गदहारिणौ ॥ १०४ ॥

दिविषदां भिषजौ मम भेषजं
कुरुतमद्य [1]नमः कृपयास्तु वाम् ।
मनुजलोकगता भिषजो जहु-
र्गदमुदीक्ष्य खरं भृशमक्ष[2]मम् ॥ १०५ ॥

सुरभिषग्युगलं बुबुधेऽथ त
त्तदकरोच्च परस्परम[3]न्त्रणम् ।
मनुजरोग[4]चिकित्सनमावयो-
रनुचितं विपरीत[5]मथो भवेत् ॥ १०६ ॥

अथ विचारयितुं ययतुस्सभां
हरिहयस्य पटू गुरुसङ्ग[6]ताम् ।
अमृतबिन्दुकणादुदियाय या
ददतुरेवममीतिमभीप्सिताम् ॥ १०७ ॥

---

[1] अ. मनः ।
[2] अ. अक्षमाः ।
[3] अ. मन्त्रणाम् ।
[4] अ. लोकचिकित्सिते ।
[5] क. मितो ।
[6] अ. संमिता ।

जिगदिषू इव वामुपलक्षये
  गदतमस्ति यदीप्सितमश्विनौ ।
असमये सदनात्सविधिं गतौ
  तदिह कारणमस्ति न संशयः ॥ १०८ ॥

हरिहयाह्वयति स्म चिकित्सितुं
  यतिवरः क्षितिलोकगतोऽपि नौ ।
इति निवेदयितुं कृत आगमो
  यदिह कार्यमुदाहरतां भवान् ॥ १०९ ॥

इदमपूर्वमुपस्थितमद्य नौ
  सुरगणेषु चिकित्सितमावयोः ।
प्रार्थितमेव हरे भुवनत्रये
  तदपि हूतिरियं मनुजेन नौ ॥ ११० ॥

हरिहयेङ्गितविद्गुरुरुत्तरं
  प्रतिजगाद पटुर्भिषजौ हसन् ।
न मनुजश्शिव एव समाह्वयत्
  गद[1]नुदौ गदितः क्षितिगो युवाम् ॥ १११ ॥

द्विजवरस्सहितो निजभार्यया
  शिवमतूतुषदुग्रतपश्चरन् ।
सुतमभीप्सुरनल्पगुणोदयं
  शिवसमं शिव एव सुतोऽजनि ॥ ११२ ॥

स ववृधे मनुजत्वमुपागतो
  द्विजगृहे द्विजमोदमुपावहन् ।
प्रथमहायन एव समग्रहीत्
  सकलवर्णमसौ निजभाषिकाम् ॥ ११३ ॥

---

[1] अ. हतौ ।

द्विसम एव शिशुर्लिखिताक्षरं
गदितुमक्षमताक्षरवित्सुधीः ।
अथ स काव्यपुराणमुपाशृणोत्
स्वयमवोक्तिमपि श्रवणं विना ॥ ११४ ॥

अजनि दुःखकरो न गुरोरसौ
श्रवणतस्सकृदेव समग्रहीत् ।
सहनिपाठिजनस्य गुरुः स्वयं
स च पपाठ ततो गुरुणा विना ॥ ११५ ॥

त्रिसम एव शिशोर्जनको जर-
न्नमृत कर्मवशास्सुतमोदितः ।
उपनिनीषत सूनुमपि स्वयं
न हि यमोऽस्य कृताकृतमीक्षते ॥ ११६ ॥

इह भवेत्सुलभं सुसुतेक्षणं
न सुलभं सुतरां विभवेक्षणम् ।
सुतमवाप कथञ्चिदयं द्विजो
न खलु वीक्षितुमैष्ट सुतोदयम् ॥ ११७ ॥

मृतमदीदहदात्मसनाभिभिः
पितरमस्य शिशोर्जननी ततः ।
समनुनीतवती [1]युवतीडितां
स्वजनतामृतिशोकहरैः पदैः । ११८ ॥

कृतवती [2]मृतिचोदितमक्षमा
निजजनैरविकारितवत्यसौ ।
उपनिनीषुरभूत्सुतमात्मनः
परिसमाप्य च वत्सरदीक्षणम् ॥ ११९ ॥

---

[1] अ. धवखण्डितां ।   [2] अ. मृत ।

उपनयं किल पञ्चमवत्सरे
  प्रचुरयोगयुते सुमुहूर्तके ।
द्विजवधू[1]र्नियता जननी शिशो-
  र्व्यधित तुष्टमनास्सह बन्धुभिः ॥ १२० ॥

अधिजगे निगमांश्चतुरोऽपि स
  क्रमत एव गुरोस्स षडङ्गकान् ।
अजनि विस्मितमत्र महामतौ
  द्विजसुतेऽल्पतनौ जनताहृदि ॥ १२१ ॥

सहनिपाठयुता वटवस्समं
  पठितुमैशत न द्विजसूनुना ।
अपि गुरुर्विशयं प्रतिपेदिवान्
  क इव पाठयितुं सहसा क्षमः ॥ १२२ ॥

मृदुवचश्चरितं कुशला मति-
  र्वपुरनुत्तममास्पदमोजसाम् ।
सकलमेतदुदीक्ष्य सुतस्य सा
  सुखमवाप निरर्गलमम्बिका ॥ १२३ ॥

परिचरञ्जननीं निगमं पठन्
  अपि हुताशरवी सवनद्वयम् ।
मनुवरैर्नियतं परिपूजयन्
  शिशुरवर्तत संस्तरणो यथा ॥ १२४ ॥

शिशुमुदीक्ष्य युवापि [2]विमन्युमान्
  दिशति वृद्धतमोऽपि निजासनम् ।
अपि करोति जनः करयोर्युगं
  वशगतो विहिताञ्जलि तत्क्षणात् ॥ १२५ ॥

---

[1] अ. वधूर्नियता ।

[2] अ. न ; का. नमस्यमुं ।

स विरजन्भववर्त्मनि सर्ववित्
 व्यधित संन्य[1]सने किल मानसम् ।
पतति कूपतले बहुकण्टके
 न हि विलोचनवान् सहजान्धवत् ॥ १२६ ॥

मम न मानसमिच्छति संसृतिं
 न च पुनर्जननीं विजहासति ।
न च गुरुर्जननी न उदीक्षते
 तदनुशासनमीषदपेक्षितम् ॥ १२७ ॥

इति विचिन्त्य स जातु मिमङ्क्षया
 बहुजलां सरितं समुपागयौ ।
जलमगाहत तत्र समग्रहीत्
 जलचरश्चरणे जलमीयुषम् ॥ १२८ ॥

स च रुरोद जले जलचारिणा
 धृतपदो हरतेऽम्ब करोमि किम् ।
चलितुमेकपदं न च पारये
 बलवता विधृतो[2]ऽत्र मुखेन हा ॥ १२९ ॥

गृहगता जननी तदुपाशृणोत्
 परवशा द्रुतमाप सरित्तटम् ।
अमृत मे प्रथमं शरणं धव-
 स्तदनु मे शरणं तनयो भवान् ॥ १३० ॥

स च मरिष्यति नक्रवशं गत-
 श्शिव न मेऽजनि हन्त पुरा मृतिः ।
इति शुशोच जनन्यपि तीरगा
 जलगातत्मजवक्त्रगतेक्षणा ॥ १३१ ॥

---

[1] अ. संन्यसितुं । [2] अ. विधृतोऽस्मुखेन ।

त्यजति नूनमसौ चरणं चलो
जलचरोऽम्ब तवानुमतेन मे ।
सकलसंन्यसने परिकल्पिते
यदि तवानुमतिं परिकल्पये ॥ १३२ ॥

इति शिशौ [1] चकिते वदति स्फुटं
व्यधित सानुमतिं द्रुतमम्बिका ।
सति सुते भविता मम दर्शनं
मृतवतस्तदु नेति विनिश्चयात् ॥ १३३

तदनु संन्यसनं मनसा व्यधात्
अथ मुमोच शिशुं [2] खलनक्रकः ।
उपययौ स नदीतटमत्रसन्
प्रणतवान्प्रहसन् जननीमपि ॥ १३४ ॥

तदनुशासनवान् प्रययौ गृहं
न्यधित संन्यसनं मुदितश्शिशुः ।
विदितशास्त्रम [3] वाप्य दयाम्बुधिं
गुरुमनुत्तममुत्तमसेवितम् ॥ १३५ ॥

प्रभुरपि स्वशरीरगमर्दितुं
गदमयं प्रथयन्नरधर्मताम् ।
यतितनुश्शिव आह्वयते स वां
गदहृतावयतं गतसंशयौ ॥ १३६ ॥

अटिटिषू क्षितलोकमितो युवां
द्विजवरौ भवतं भिषजौ नरौ ।
बलिविधिर्भजनीयसुरानुगो
भवति हीति वदन्ति जना अपि ॥ १३७ ॥

---

[1] अ. चकिता ।    [2] अ. जल ।
[3] अ. अवाप ।

इति निगद्य वचस्सुरदेशिके
स्थितवति प्रथितौजसि चाश्विनौ ।
गृहमुपेत्य यथोदितभेषजं
जगृहतुर्दधतुर्गतये मनः ॥ १३८ ॥

द्विजतनुं प्रविधाय भिषग्वरौ
मनुजलोकमुपेयतुरश्विनौ ।
धवलसूत्रधरौ विमलाम्बरौ
करसरोरुहमूलकपुस्तकौ ॥ १३९ ॥

मलयजेन कृतायतपुण्ड्रकौ
स्मितविकासिमुखेन्दुविराजितौ ।
चटुलसाञ्जनपङ्कजलोचनौ[2]
मृदुसुदीर्घकराम्बुजशोभिनौ ॥ १४० ॥

उपगतौ भिषजौ द्युसदां पतिं
यतिमलोकयतां गदपीडितम् ।
मुनिवरोऽप्यवलोक्य तुतोष तौ
नयनमानसहारिवपुर्धरौ ॥ १४१ ॥

द्विजवरौ किमिदं भुजमूलके
कुत उपागमनं सुमुखौ युवाम् ।
किमिह कृत्यमितः क्व गमिष्यथो
निवसनं क्षणमत्र सुखाय मे ॥ १४२ ॥

लिखितमेतदनल्पचिकित्सितं
यतिवरेह सुखाय विदूरगौ ।
विगमिषू स्वयमेव पदं शनै-
र्यदि सुखं वसनेन वसाव ते ॥ १४३ ॥

यदि युवां भिषजौ वयमर्थिनो
गुरुरयं [1]गदितो बहुवित्तमः ।
कुरुतमस्य चिकित्सितमीप्सितं
[2]विधिनुतं भवतोरिह दर्शनम् ॥ १४४ ॥

भुवि दिनानि बहूनि भिषग्वरा
न मृगयामहि ते च कृताक्रियाः ।
गदमसाध्यमुदीर्य ययुर्गृहं
मृगयितव्यमतो[3] भवतोर्युगम् ॥ १४५ ॥

विधिकृतागमनौ सहसा युवां
गुरुरयं विगतज्वर [4]ईप्सितः ।
इति बुधौ हृदये प्रतिभाति नो
हृदयमेव हि मानमभीप्सिते ॥ १४६ ॥

इति समीपगशिष्यगणोदिना-
वव्रदतां भिषजौ यतिसत्तमम् ।
रहसि येयमितो भवता यते
वितनवाव यथाबलमौषधम् ॥ १४७ ॥

दृढसुधामयदोर्युगलेन तौ
गदमुदीक्ष्य समस्पृशतां शनैः ।
द्विजवरौ भिषजौ मुनिसत्तमं
तत उपाजनि शं सह निद्रया ॥ १४८ ॥

निजकरे मथितोत्थितवह्निके
ज्वलनवज्ज्वलितामभितापिताम् ।
बहुविधौषधभाजन [5]मूर्तिकां
निजकराङ्गु[6]लिकारुधिरस्रुतिम् ॥ १४९ ॥

---

[1] अ. गदिको ।
[2] अ. कृतं ।
[3] अ. मिदं ।
[4] अ. ईङ्गितः ।
[5] का. मृत्तिकां ।
[6] का. लिकां ।

सुखमताडयतां गदमस्तके
द्विजवरौ भिषजौ द्युसदामथ ।
समुदमीलयदाक्षियुगं मुनि-
र्न च पुरो ददृशे द्विजयोर्युगम् ॥ १५० ॥

समभवन्मुनिरेव निरामय-
स्स्वभवनं ययतुस्सुखमश्विनौ ।
द्विजवरौ बुबुधे मुनिरश्विनौ
[1] अचकथन्निजशिष्यगणाय तत् ॥ १५१ ॥

मुमुदिरे यतयो गुरुमात्मनो
गतगदं परिदृश्य सुखोषितम् ।
स्वगुरुणा सुखदुःखसमो जनो
भवति निर्वृतये हि निरीतये ॥ १५२ ॥

प्रावृड् यत्र समं शरद्वनितया पूश्शारदी वर्णिता
हेमन्तश्शिशिरेण देशिकवरप्राप्तिर्महीवर्तिनाम् ।
नानाव्याधिहतां निवृत्तिरमुना ह्वातिश्च नासत्ययो-
र्यातश्शङ्करदेशिकेन्द्रविजये सर्गोऽयमेकादशः ॥ १५३ ॥

॥ इति श्रीशङ्करविजये व्यासाचलीये
एकादशस्सर्गः ॥

---

[1] का. अकथयन् ।

## ॥ अथ द्वादशस्सर्गः ॥

---

श्रीगोकर्णं यातुकामः कदाचि-
च्छ्रीवल्याख्यं ग्रामवर्यं जगाम ।
शिष्टैर्जुष्टं वेदविद्भिर्महद्भिः
श्रीमान्पूज्यो देशिकेन्द्रोऽस्मदीयः ॥ १ ॥

यतोऽपमृत्युर्वहिरेव याति
भ्रान्त्या [1]प्रवेशं शनकैरलब्ध्वा ।
दृष्ट्वा द्विजातीन्निजकर्मनिष्ठान्
दूरान्निषेध्यान् यजतोऽप्रमत्तान् ॥ २ ॥

यस्मिन्सहस्रत्रितयं द्विजानां
अभ्यार्हितानां श्रुतिपाठकानाम् ।
वसत्यजस्रं श्रुतिचोदितासु
क्रियासु दक्षं प्रथितानुभावम् ॥ ३ ॥

मध्ये वसन्यस्य करोति भूषां
पिनाकपाणिर्गिरिजासहायः ।
हारस्य यष्टेस्तरलो यथाऽभूत्
रात्रेरिवेन्दुर्गगनाधिरूढः ॥ ४ ॥

अधीयमानेषु सलक्षणं द्विजै-
र्वेदेषु पुण्येषु पदक्रमादिभिः ।
समं विमानाधिगतश्चतुर्मुखः
शृणोति यत्रावहितास्तिरोहितः ॥ ५ ॥

---

[1] का. प्रवेकं ।

अध्याप न्वेदचणान्निशम्य
ग्रामान्तराद्वर्णिन एत्य यत्र ।
अधीयते वेदमनल्पयत्ना
स्संभिक्षमाणा भवनेषु भिक्षाम् ॥ ६ ॥

चन्द्रा[1] तपान्भर्तुमलं न यत्र
दिवातपे वृक्षगणैरुपेते ।
स्निग्धप्रवालायितसर्वशाखैः
फलप्रसू[2] नोपनतैर्जनोऽयम् ॥ ७ ॥

आसाद्य यं पान्थजनाः परिश्रमं
जहत्यनल्पं विमलोदकाशयम् ।
सुगन्धिमन्दामृनवाहिना मुहु-
र्निषेवितं गन्धवहेन सर्वदा ॥ ८ ॥

यत्राग्निहोत्राहुतिगन्धलोभात्
तरास्विनो मन्दगमा भवन्ति ।
एतन्निषेवोऽखिलपापहारी-
त्येवं जना केचन तज्जुषन्ते ॥ ९ ॥

तत्र द्विज श्रुतियुत श्रुतिवाकचवादी
श्रौतादिकर्मनिरतो निजदारतुष्टः ।
सन्तर्पयन्नतिथिपूगमनल्पचेता
ास्ते दयालुहृदयो मृदुवाक् सुशीलः ॥ १० ॥

गावो हिरण्यं धरणी समग्रा
सद्बान्धवा ज्ञातिजनाश्च तस्य ।
सन्त्येव किं तैर्न हि तोष एभिः
पुत्रो यदस्याजनि मुग्धचष्टः । ११ ॥

---

[1] अ. चन्द्रातपा भेत्तुं ; का. चन्द्रातपोद्भेद ।   [2] अ. नावनतैः ।

न वक्ति किञ्चिन्न शृणोति किञ्चित्
ध्यायन्निवास्ते किल मन्दचेष्टः ।
रूपेण मारो महसा विवस्वान्
मुखेन चन्द्रः क्षमया महीसमः ॥ १२ ॥

ग्रहग्रहात्किं जडुवद्विचेष्टते
किं वा स्वभावःद्रुत पूर्वकर्मणः ।
सञ्चिन्तयंस्तिष्ठति तत्पितानिशं
[1]समाधिमान् प्रष्टुमना बहुश्रुतान् ॥ १३ ॥

शिष्यैः प्रशिष्यैर्बहु[2]पुण्यभारै-
स्समागतं कञ्चन पूज्यपादम् ।
शुश्राव तं ग्राममनिन्दितात्मा
निनाय सूनुं निकटं स तस्य ॥ १४ ॥

न शून्यहस्तो नृपमिष्टदेवं
गुरुश्च यायादिति शास्त्रवित्स्वयम् ।
सोपायनः प्राप गुरुं व्यशिश्रणत्
फलं ननामास्य च पादपङ्कजे ॥ १५ ॥

अनी[3]नमत्तञ्च तदीयपादयो-
र्जडाकृतिं भस्मनिगूढवह्निवत् ।
स नोदतिष्ठत्पतितः पदाम्बुजे
प्रायस्स[4]जाड्यं प्रकटं विधित्सति ॥ १६ ॥

उपात्तहस्तश्शनकैरवाङ्मुखं
तं देशिकेन्द्रः कृपयोदतिष्ठिपत् ।
उत्थापिते स्वे तनये पिताब्रवी-
दिदं प्रभो जाड्यममुष्य किंकृतम् ॥ १७ ॥

---

[1] अ. समागतान् ।
[2] अ. पुस्त ।
[3] का. अनीनयत् ।
[4] अ. स्व ।

वर्षाण्यतीयुर्भगवन्नमुष्य
पञ्चाष्ट जातस्य विनावबोधम् ।
नाध्यैष्ट वेदानखिलांश्च नार्णान्
[1]अकारयं चोपनयं कथंचित् ॥ १८ ॥

क्रीडापरः क्रोशति बालवर्गः[2]
स्तथापि न क्रीडितुमेष [3]धावति ।
[4]बालं हठान्मुग्धमिमं निरीक्ष्य
सन्ताडयन्तोऽपि न रोषमेति ॥ १९ ॥

भुङ्क्ते कदाचिन्न च जातु भुङ्क्ते
स्वेच्छाविचारी न करोति चोक्तम् ।
तथापि रुष्टे न तु ताड्यतेऽयं
स्वकर्मणा वर्धित एव नित्यम ॥ २० ॥

इतीरयित्वोपरते च विप्रे
पप्रच्छ तं शङ्करदेशिकेन्द्रः ।
कस्त्वं किमेवं जडवत्प्रवृत्ति-
स्स चाब्रवीद्बालवपुर्महात्मा ॥ २१ ॥

नाहं जडः किन्तु जडः प्रवर्तते
मत्सान्निधाने न विसन्दिहे गुरो ।
षडूर्मिषड्भावविकारवर्जितं
सुखैकतानं परमस्ति तत्पदम् ॥ २२ ॥

ममेव भूयादनुभूतिरेषा
मुमुक्षुवर्गस्य [5]निरूप्य विद्वान् ।
पद्यैर्वरैर्द्वादशभिर्बभाषे
चिदात्मतत्त्वं विधुत[6]प्रपञ्चः ॥ २३ ॥

---

[1] अ. अचीकरं ।
[2] अ. वर्गः ।
[3] अ. याति ।
[4] अ. बालाश्शठा ।
[5] का. निरूपणीया ।
[6] अ. प्रपञ्चम् ।

प्रकाशयन्ते [1] परमात्मतत्त्वं
करस्थधात्रीफलवद्यदेकम् ।
श्लोकास्तु हस्तामलकाः प्रसिद्धा-
स्तत्कर्तुराख्यापि तथैव वृत्ता ॥ २४ ॥

विनोपदेशं स्वत एव जातं
परात्मबोधं द्विजवर्यसूनो ।
व्यस्मेष्ट संप्रेक्ष्य स देशिकेन्द्रो
न्यधात्स्वहस्तं कृपयोत्तमाङ्गे ॥ २५ ॥

पुराभवाभ्यासवशेन सर्वं
स वेत्ति सम्यङ् न च वक्ति किञ्चित् ।
नो चेत्कथं स्वानुभवैकगम्य-
पद्यानि भाषेत निरक्षरास्यः ॥ २६ ॥

सुते निवृत्ते वचनं बभाषे
स देशिकेन्द्रः पितरं तदीयम् ।
वस्तुं न योग्यो भवता सहायं
न तेऽमुनार्थो जडिमास्पदेन ॥ २७ ॥

न सक्तिरस्यास्ति गृहादिगोचरा
नात्मीयदेहे ममतास्य विद्यते ।
[2] तदात्मतोऽन्यत्र ममत्ववेदनं
यदा न सा स्वे किमु बाह्यवस्तुषु ॥ २८ ॥

इतीरयित्वा भगवान्द्विजात्मजं [3]
ययौ गृहीत्वा दिशमीप्सितां पुनः ।
विप्रोऽप्यनुव्रज्य ययौ स्वमन्दिरं
कियत्प्रदेशं स्थिरधीर्बहुश्रुतः ॥ २९ ॥

---

[1] अ. परमार्थ ।
[2] अ. तादात्म्यतोऽन्यत्र (?) ।
[3] अ. द्विजन्मजं ।

जम्बूद्वीपं शस्यतेऽस्यां पृथिव्यां
तत्राप्येतन्मण्डलं भारताख्यम् ।
काश्मीराख्यं मण्डलं तत्र शस्तं
यत्रास्ते सा शारदा वागधीशा ॥ ३० ॥

द्वारैर्युक्तं मण्डपैस्सच्चतुर्भि
र्देव्या गेहं यत्र सर्वज्ञपीठम् ।
यत्रारोहस्सर्व [1] विद्वज्जनानां
नान्ये सर्वे यत्प्रवेष्टुं क्षमन्ते ॥ ३१ ॥

प्राच्याः प्राचीं पश्चिमाः पश्चिमान्तां
ते चोदीच्यास्तामुदीचीं प्रपन्नाः ।
सर्वज्ञास्तद्द्वारमुद्धाटयन्तो
दक्षा नोऽद्धा नो तदुद्धाटको वा ॥ ३२ ॥

वार्तामुपश्रुत्य स दाक्षिणात्यो
मानं तदीयं परिपातुमिच्छन् ।
काश्मीरदेशाय जगाम हृष्टः
श्रीशङ्करो द्वारमपावरीतुम ॥ ३३ ॥

द्वारं पिनद्धं किल दाक्षिणात्या
न सन्ति विद्वांस इतीह दक्षाः ।
तां किंवदन्तीं विफलां विधातुं
जगाम देवीनिलयाय हृष्यन् ॥ ३४ ॥

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसर्वङ्कष-
श्रीमच्छङ्करदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ।
दूरं गच्छत वादिदुश्श्र [2] गजास्सन्याससंदंष्ट्रायुधो
वेदान्तोपवनाश्रयस्तदपरं द्वैतं वनं भक्ष्यति ॥ ३५ ॥

---

[1] अ. वित्सजनानां ।  [2] अ. दुःशठ ।

तं श्रावयन्नध्वनि देशिकेन्द्रः
श्रीदक्षिणद्वारभुवं प्रपेदे ।
कवाटमुद्घाट्य निवेष्टुकामं
ससंभ्रमं वादिजनो न्यरौत्सीत् ॥ ३६ ॥

अथाब्रवीद्वादिगणस्स देशिकं
किमर्थमेवं बहुसंभ्रमाक्रिया ।
यदत्र कार्यं तदुदीर्यतां शनै-
र्न संभ्रमं कर्तुमलं तदीप्सितम् ॥ ३७ ॥

यःकश्चिदेतीति परीक्ष्यते चेत्
वेदाखिलं [1] नोऽविदितं ममाण्वपि ।
इत्थं भवान्वाक्समुन्नतेच्छया
दत्वा परीक्षां व्रज देवतालयम् ॥ ३८ ॥

षड्भाववादी कणभुङ्मताश्रित्
पप्रच्छ तं स्वीयरहस्यमेकम्
संयोगभाजः परमाणुयुग्मात्
जातश्च सूक्ष्मं द्व्यणुकं मतं नः ॥ ३९ ॥

यस्मादणुत्वं तदुपाश्रितं त-
ज्जायेत कस्माद्वद सर्वविच्चेत् ।
नो चेत्प्रभुत्वं तव वक्तुमेतत्
सर्वज्ञभाषा विहिता कथं ते ॥ ४० ॥

या द्वित्वसंख्या परमाणुनिष्ठा
सा कारणं तस्य गतस्य मात्रा ।
इतीरिते तद्वचनं प्रपूज्य
स्वयं [2] ह्यवधिष्ट कणादलक्ष्मी ॥ ४१ ॥

---

[1] अ. नाविदितं ।  [2] का. न्यवर्तिष्ट ।

[1]तत्रास नैयायिक आत्तगर्वः
कणादपक्षाच्चरणाक्षपक्षे ।
मुक्तेर्विशेषं वद सर्वविच्चेत्
नो चेत्प्रतिज्ञां त्यज सर्ववित्त्वे ॥ ४२ ॥

[2]आद्यन्तनाशे गुणसंहतेर्या
स्थितिर्नभोवत्कणभक्षपक्षे ।
मुक्तिस्तदीये चरणाक्षपक्षे
सानन्दसंवित्सहिता विमुक्तिः ॥ ४३ ॥

पदार्थभेदः स्फुट एव सिद्ध
स्तथेश्वरस्सर्वजगद्विधाता ।
स ईशवादीत्युदितेऽभिनन्द्य
नैयायिकोऽपि न्यवृतद्विरोधात् ॥ ४४ ॥

तं कापिलः स्माह च मूलयोनिः
किं वा स्वतन्त्रा चिदधिष्ठिता वा ।
जगन्निदानं वद सर्ववित्त्वा
न्नो चेद्विशेषस्तव दुर्लभः स्यात् ॥ ४५ ॥

सा विश्वयोनिर्बहुरूपभागिनी
स्वयं स्वतन्त्रा त्रिगुणात्मिका सती ।
इत्येव सिद्धान्तगतिस्तु कापिली
वेदान्तपक्षे परतन्त्रता मता ॥ ४६ ॥

[3]ततो भदन्तो न्यरुणत्स सर्वो
दत्वा परीक्षां व्रज धाम देव्याः ।
बौद्धास्तथा संप्रथिताः पृथिव्यां
बाह्यार्थविज्ञानकशून्यवादैः ॥ ४७ ॥

---

[1] अ. तत्रापि । [2] अ. अत्यन्त ।
[3] अ. तथागतोऽथ ।

बाह्यार्थवादो द्विविधस्तदन्तरं
वाच्यं विवक्षुर्यदि देवतालयम् ।
विज्ञानवादस्य च किं विभेदकं
भवन्मतं ब्रूहि ततः परं व्रज ॥ ४८ ॥

सौत्रान्तिको वक्ति हि वेद्यजातं
लिङ्गाधिगम्यं त्वितरोऽक्षगम्यम् ।
तयोस्तयोर्भङ्गुरता विशिष्टा
भेदः क्रियात् वेदनिवेद्यभागी ॥ ४९ ॥

विज्ञानवादी क्षणिकत्वमेषा-
मङ्गीचकारापि बहुत्वमेषः ।
वेदान्तवादी स्थिरसंविदेके-
त्यङ्गीचकारेति महान्विशेषः ॥ ५० ॥

अथाब्रवीद्दिग्वसनानुसारी
रहस्यमेकं वद सर्वविच्चेत् ।
यदस्तिकायोत्तरशब्दवाच्यं
तत्किं मतेऽस्मिन्वद देशिकाशु ॥ ५१ ॥

तत्राह देशिकवरः शृणु रोचते चेत्
जीवादिपञ्चकमभीष्टमुदाहरन्ति ।
तच्छब्दवाच्यमिति जैनमते प्रशस्ते
यद्यस्ति [1]बोद्धुमपरं कथयाशु तन्मे ॥ ५२ ॥

दत्तोत्तरे वादिगणे तु बाह्ये
बभाण कश्चित्किल जैमिनीयः ।
शब्दः किमात्मा वद जैमिनीये
द्रव्यं गुणो वेति ततो व्रज त्वम् ॥ ५३ ॥

---

[1] अ. बोद्धुं ।

नित्या वर्णास्स[1]र्वगाः श्रोत्रवेद्या
यत्तद्रूपं शब्दजालश्च नित्यम् ।
द्रव्यं व्यापीत्यब्रुवञ्जैमिनीयाः
इत्येवं तं प्रोचिवान् देशिकेन्द्रः ॥ ५४ ॥

शास्त्रेषु सर्वेष्वपि दत्तवन्तं
प्रत्युत्तरं तं समपूजयंस्ते ।
द्वारं समुद्घाट्य ददुश्च मार्गं
ततो विवेशान्तरभूमिभागम् ॥ ५५ ॥

अथारुरुक्षौ मुनिपुङ्गवेऽस्मिन्
सर्वज्ञपीठं बहुवेदि[2]सेव्यम् ।
मास्मिन् प्रविक्षो मुनिपुङ्गव त्वं
विद्यासु सर्वासु परीक्षणीयः ॥ ५६ ॥

प्रादुर्बभूवेत्थमनङ्ग[3]सङ्गहा
प्रसन्नगम्भीरपदा सरस्वती ।
शृण्वत्सु सर्वेषु सविस्मयं तदा
महीभृदर्या इव देवतामुखात् ॥ ५७ ॥

श्रुत्वा गिरं पार्श्वनिवासिनो जनाः
तमाहुराचार्यममत्सराग्रहाः ।
न मानुषी वागियमक्षरात्मिका
विनिर्गता केवलमम्बिकामुखात् ॥ ५८ ॥

त्वाश्चान्तरा यवनिकां परमेश्वरीश्च
कांचिन्निषेहि भगवंस्तदनुक्रमेण ।
अस्यां गिरं प्रविहितां वितरैः परीक्षितां
सर्वज्ञपीठमनुसङ्क्रम्य जोषमास्स्व ! ॥ ५९ ॥

---

[1] अ. सर्वशः । [2] अ. देवि ।
[3] अ. सुग्रहा ।

आभाषिते यवनिकां [1]दृढमाबबन्धु-
र्मध्ये तयोर्भगवती मुनिदेशिकेशम् ।
पप्रच्छ तं भगवती निखिलाश्च विद्याः
तस्योत्तरं क्रमत आह मुनीन्द्रवर्यः ॥ ६० ॥

विद्याश्चतुष्षष्टिरिति प्रकाशाः
परीक्ष्यमाणासु च तासु तत्क्रमात् ।
वात्स्यायनप्रोक्तमसौ न वेत्ती-
त्यालोच्य तत्प्रश्नमथाकरोत्सा ॥ ६१ ॥

कलाः कियत्यो वद पुष्पधन्वनः
किमात्मिका किञ्च पदं समाश्रिताः ।
पूर्वे च पक्षे कथमन्यथा स्थितिः
कथं युवत्यां कथमेव पुरुषे ॥ ६२ ॥

नेतीरितः किञ्चिदुवाच शङ्करः
विचिन्तयन्नास्त चिरं विचक्षणः ।
तासामनुक्तौ भविताल्पवेदिता
भवेत्तदुक्तौ मम धर्मसंक्षयः ॥ ६३ ॥

आलोच्य किञ्चिन्मनसा निदध्यौ
मृतं युवानं निकटे महीपम् ।
देवीं ययाचे स दिनानि सप्त
देह्यम्ब पश्चाद्वदितास्मि सर्वम् ॥ ६४ ॥

कृत्वा समाधिं तरुकोटरे स्वां
तनुं न्यधात्कश्चन रक्षणाय ।
त्यक्त्वा तदा योगबलेन जीवं
लात्वा महीपस्य विवेश देहम् ॥ ६५ ॥

---

[1] अ. निबिडां बबन्धुः ।

अङ्गुष्ठमारभ्य समीरणं नयन्
  करन्ध्रमार्गाद्बहिरेत्य योगवित् ।
करन्ध्रमार्गेण शनैः प्रविष्टवान्
  मृतस्य यावच्चरणाग्रमेकधीः ॥ ६६ ॥

गात्रं परासोर्वसुधाधिपस्य
  शनैस्समस्पन्दत हृत्प्रदेशे ।
तथोदमीलन्नयनं क्रमेण
  तथोदतिष्ठच्च यथापुरेदम् ॥ ६७ ॥

पौरा अमात्यास्तनयाः स्वबान्धवाः
  दृष्ट्वा महिष्यस्सहसोत्थितं मृतम् ।
जहुश्शुचं मोदमवापुरुत्तमं
  मृते समायाति न कस्य जायते ॥ ६८ ॥

पूजां व्यधुः क्वचन दैवतानां
  केचिद्ददुर्गामपरे हिरण्यम् ।
कृते महीपस्य तदाथ हृष्टाः
  सोपायनाः केचिदुपासताग्रे ॥ ६९ ॥

पुरेव भोगान्बुभुजे महीभृत्
  स भोगिनीभिस्सहितो व्यरंस्त ।
कन्दर्पशास्त्रानुगतः प्रवीणो
  वात्स्यायनं तच्च निरैक्षताद्धा ॥ ७० ॥

वात्स्यायनप्रोदितसूत्रजातं
  तदीयभाष्यश्च [1] निवीक्ष्य सर्वम् ।
स्वयं व्यधत्ताभिनवार्थगर्भ-
  निबन्धमेकं नृपवेषधारी ॥ ७१ ॥

---

[1] अ. निरीक्ष्य सम्यक् ।

वात्स्यायनीयमधिगत्य रहस्यमर्थं
त्यक्त्वा तनुं नरपतेः स्वकमाविवेश ।
गात्रं पुरोदितनयेन स देशिकेन्द्रः
संज्ञामवाप च पुरेव समुत्थितोऽभूत् ॥ ७२ ॥

योऽपालयत्परशरीरनिवेशकाले
गात्रं स्वकीयतनुवाद्दिनसप्तकं तत् ।
जाग्रद्दिवानिशमतन्द्रित एव भक्त्या
तं सच्चकार वसनाशनभोगजातैः ॥ ७३ ॥

राजा जनानां हितकारिचेष्टो
जगाम कालं पुनरामयेन ।
पुरेव वार्तेति ससार लोके
शुशोच तीव्रं महिषीगणोऽस्य ॥ ७४ ॥

अभिषिषेचुरथात्मजमीश्वरं
प्रकृतयः पुनरेत्य विचक्षणाः ।
तमधिगम्य जनो मुमुदे भृशं
स ववृधे मतिमान् जितशात्रवः ॥ ७५ ॥

घस्रेऽष्टमे [1] जवानिकां विनिबध्य दातुं
प्रश्नोत्तरं स भगवान्निषसाद चाग्रे ।
देव्यास्समस्तजनसंसदि निर्विशङ्कं
प्रारब्धवेदितुमनाः प्रतिवाचमीशाः ॥ ७६ ॥

संख्यां कलानां मकरध्वजस्य
स्वरूपभेदं वपुषि स्थितानाम् ।
स्त्रीपुंसयोः स्थानविभागमाख्य-
द्देशं स शुक्लेतरपक्षयोश्च ॥ ७७ ॥

---

[1] अ. यवनिकां ।

निवेदिते कामकलारहस्ये
विद्यासु सर्वासु समीक्षितासु ।
सर्वज्ञपीठं निर्विविक्षमाणे
तस्मिन्नभाषिष्ट च वागधीशा ॥ ७८ ॥

शुद्धाः कुलीना विदिताखिलार्थाः
पीठं समारोढुमिदं प्रशस्तम् ।
योग्या न योग्या इतरेऽप्रशस्ता
स्तिष्ठ क्षणं त्वं कुरु साहसं मा ॥ ७९ ॥

त्वश्चाङ्गनास्समुपभुज्य कलारहस्य-
प्रावीण्यभाजनमभूर्यतिधर्मनिष्ठः ।
आरोढुमीदृशपदं कथमर्हसि त्वं
सर्वज्ञतैव विमलत्वमपीह हेतुः ॥ ८० ॥

नास्मिन् शरीरे कृतकिल्बिषोऽहं
जन्म प्रभृत्यम्ब न संशयोऽत्र ।
व्यधायि देहान्तरसंश्रयाद्य
न्न तेन लिप्येत हि कर्मणान्यत् ॥ ८१ ॥

एवं निरुत्तरपदां स विधाय देवीं
सर्वज्ञपीठमधिरुह्य ननन्द सभ्यः ।
मान्या गिरामपि तथा पुरुषैश्च सभ्यै-
स्संभावितो रुचितदेशमयं जगाम ॥ ८२ ॥

एकश्शारवी शङ्कराख्यश्चतुर्धा
स्थानं भेजे पापशान्त्यै जनानाम् ।
शिष्यैः स्कन्धैश्शिष्यशाखैर्महद्भि-
र्ज्ञानं पुष्पं यत्र मोक्षप्रसूतिः । ८३ ॥

सङ्कोचयन् वादिमुखाम्बुजानि
विकासयन् केवलमात्मपक्षम् ।
आनन्दयन् संसृतिमार्गश्रान्तान्
श्रीशङ्करेन्दुर्जयति प्रकामम् ॥ ८४ ॥

शुक्ले च कृष्णे च समानतेजाः
पक्षे बहिश्चान्तरमन्धकारम् ।
अपानुदन् शङ्करदेशिकेन्द्रो
जयत्यपूर्वं क्षितिमार्गचारी ॥ ८५ ॥

गोबृन्दैरभिभासयन्नभिमतानर्थान्विशिष्टार्थदान्
व्योमव्यापिपदे स्थितो निरवधावुत्थाय गोत्रोत्तमात् ।
सङ्क्रम्य वसुधातले विपुलभास्सारं सुसंपूजितः
श्रीमच्छङ्करभास्करो विजयते मुष्णन् जनानां तमः
॥ ८६ ॥

श्रीमच्छङ्करदेशिकेन्द्रचरणद्वन्द्वाम्बुजन्मान्वयि-
श्रद्धाभक्तिवशेन केवलमियं तद्गोचरा सत्कथा ।
न ख्यात्यै न च पूजनाय कथिता नो भूमिवित्ताप्तये
वाचं मे पवितुं तदीयचरिताम्भोभिरसदा तद्वदाम्
॥ ८७ ॥

यत्रोच्यते वादिगुणानुयोग-
व्याजेन सिद्धान्तरहस्यमद्धा ।
स द्वादशोऽगाद्विजयेऽत्र सर्गः
श्रीशाङ्करे व्यासगिरिप्रणीते ॥ ८८ ॥

॥ इति श्रीशङ्करविजये व्यासाचलीये
द्वादशस्सर्गः ॥

समाप्तोऽयं ग्रन्थः ।

श्रीः

## श्लोकानुक्रमणिका

### उ

फ



ब